# श्रीमल्लक्ष्यसंगीतम् ।



भरतखंडनिवासिचतुराख्यपंडितेन

( अर्वाचीनसंगीतपद्धतिपरिचयसौकर्यसमेतम् )

निर्मितम्.



तच्च

मुम्बय्यां

निर्णयसागरयंत्रालये मुद्राक्षरैरंकयित्वा प्राकाश्यं नीतम्.

शके १८३१, सन १९१०.



# ॥ अथ श्रीमदर्पणश्लोकः ॥

चतुराख्येन भरत–पूर्वखंडनिवासिना ।
लक्ष्यसंगीतग्रंथोऽयं सत्पदाब्जयुगेऽर्पितः ॥ १ ॥



मुम्बय्यां

निर्णयसागराख्यमुद्रणालये प्रकाशयित्रर्थं बाळकृष्ण रामचंद्र घाणेकर
इत्यनेन मुद्रितम् ।




श्रीः

श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः । श्रीगुरुभ्यो नमः ।

# अथ श्रीमल्लक्ष्यसंगीतप्रारंभः ।

## मंगलाचरणम् ।

प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम् ।
सर्वविघ्नोपशांत्यर्थं लक्ष्यसंगीतमारभे ॥ १ ॥

श्रीब्रह्माद्यैरर्चिता या सुरेंद्रै-र्भक्तिश्रद्धाभावयुक्तैः सदैव ।
प्राचीनार्वाचीनसंगीततत्वस्फूर्त्यै तां श्रीशारदां नौम्यभीष्टाम् ॥ २ ॥

श्रीसद्गुरोस्तस्य पदारविंदद्वंद्वं तमोनुत्तय आशु वंदे ।
यस्यानुकंपा सहसैव मूकं करोति वाचालमिति प्रथेयम् ॥ ३ ॥

संगीतपूर्वाचार्याणां महतामप्यनुज्ञया ।
धैर्यमालंब्य कुर्वेऽमुं प्रबंधं स्वांतशुद्धये ॥ ४ ॥

## प्रथमाध्यायः

अथ श्रीलक्ष्यसंगीतप्रथमाध्याय ईर्यते ।
चतुराख्येन भरत-पूर्वखंडनिवासिना ॥ ५ ॥

निर्मथ्यातिप्रयत्नेन मतभेदपयोनिधिम् ।
चतुराभिमतां वक्ष्ये हिंदुस्थानीयपद्धतिम् ॥ ६ ॥

प्रणाल्यौ तत्र द्वे प्रोक्ते संगीतस्य विचक्षणैः ।
आद्या कर्णाटकीयासौ हिंदुस्थानी तथा परा ॥ ७ ॥

कर्णाटकी पद्धतिर्या सा मद्रासनिबंधिनी ।
अन्यत्र सर्वतो हिंदुस्थानीया बहुसंमता ॥ ८ ॥

तत्र तत्र स्थानभेदे वैचित्र्ये सत्यपि क्वचित् ।
सामान्यत्वेन सैकैव पद्धतिर्विदुषां मता ॥ ९ ॥

गीतं वाद्यं तथा नृत्यं त्रयं संगीतमुच्यते ।
मार्गदेशीविभागेन संगीतं द्विविधं मतम् ॥ १० ॥
मार्गितं प्रथमाचार्यैर्यन्त्रितं नियमोत्तमैः ।
अतिशुद्धरूपमपि सांप्रतं नैव गोचरम् ॥ ११ ॥
अधुना लक्ष्यमार्गे यत् स्वरूपं परिदृश्यते ।
तत्सर्वं देशिसंज्ञं स्यादित्याहुर्लक्ष्यवेदिनः ॥ १२ ॥

रागविबोधे,

गीतं द्वेधा मार्गो देशी मार्गः स यो विरिंचाद्यैः ।
अन्विष्टो भरताद्यैः शंभोरग्रे प्रयुक्तोऽर्च्यः ॥ १३ ॥
देशे देशे रुच्या यज्जनहृद्रंजनं तु सा देशी ।
स तु लोकरुचिविकलितः प्रायो लक्ष्यात्र देशी तत् ॥ १४ ॥

रत्नाकरे,

मार्गो देशीति तद्द्वेधा तत्र मार्गः स उच्यते ।
यो मार्गितो विरिंच्याद्यैः प्रयुक्तो भरतादिभिः ।
देवस्य पुरतः शंभोर्नियताभ्युदयप्रदः ॥ १५ ॥
देशे देशे जनानां यद्रुच्या हृदयरंजकम् ।
गानं च वादनं नृत्यं तद्देशीत्यभिधीयते ॥ १६ ॥
अबलाबालगोपालैः क्षितिपालैर्निजेच्छया ।
गीयते यानुरागेण स्वदेशे देशिरुच्यते ॥ १७ ॥

संगीतदर्पणे,

गीतं वाद्यं नर्तनं च त्रयं संगीतमुच्यते ।
मार्गदेशीविभागेन संगीतं द्विविधं मतम् ॥ १८ ॥
द्रुहिणेन यदन्विष्टं प्रयुक्तं भरतेन च ।
महादेवस्य पुरतस्तन्मार्गाख्यं विमुक्तिदम् ॥ १९ ॥
तत्तद्देशस्थया रीत्या यत्स्याल्लोकानुरंजनम् ।
देशे देशे तु संगीतं तद्देशीत्यभिधीयते ॥ २० ॥

टिप्पनी,

रत्नाकरः शास्त्रग्रंथेष्वाद्येष्वनुपमो मतः ।
तत्राप्यंगीकृतं नूनं प्राधान्यं देशिकस्य तत् ॥ २१ ॥
पूर्वप्रसिद्धसंगीतं प्रसिद्धमधुना तथा ।
द्विविधमेव तत्रोक्तं संगीतं शास्त्रकारिणा ॥ २२ ॥
शार्ङ्गदेवस्यापि काले देशी संगीतमेव हि ।
लक्ष्येऽधिकं सुप्रतीतमिति तर्कयितुं क्षमम् ॥ २३ ॥
रत्नाकरानुगाश्चापि तद्विनिर्मितपद्धतिम् ।
यथायोग्यप्रमाणेन नैव ज्ञातुमशक्नुवन् ॥ २४ ॥
दाक्षिणात्यप्रणाल्यास्तु निर्माता व्यंकटेश्वरः ।
रत्नाकरगतान्रागानुद्दिश्य चेदमब्रवीत् ॥ २५ ॥

चतुर्दंडिप्रकाशिकायाम्,

"रागास्तावद्दशविधा भरताद्यैरुदीरिताः ।
ग्रामरागाश्चोपरागा रागा भाषाविभाषिकाः ॥ २६ ॥
तथैवांतरभाषाख्या रागांगाख्यास्ततः परम् ।
भाषांगानि क्रियांगानि चोपांगानि पुनः क्रमात् ॥ २७ ॥
दशस्वेतेषु रागेषु ग्रामरागादयः पुनः ।
रागास्त्वंतरभाषांता मार्गरागा भवंति षट् ॥ २८ ॥
ततो गंधर्वलोकेन प्रयोज्यास्ते व्यवस्थिताः ।
तस्माद्रागांगभाषांगक्रियांगोपांगसंज्ञिकाः ।
रागाश्चत्वार एवैते देशिरागाः प्रकीर्तिताः" ॥ २९ ॥
रागांगादिचतुष्टयमधुनापि सुगोचरम् ।
संगीते दाक्षिणात्यानामिति सर्वसुसंमतम् ॥ ३० ॥
मूर्छनाया रहस्यं तद्रत्नाकरप्रपंचितम् ।
स्फुटमेवाभवद्बोद्धुं न शक्तः कोऽपि पंडितः ॥ ३१ ॥
जातिप्रकरणं चापि तद्ग्रंथे सुनिरूपितम् ।
अनेकानुकृतं सद्यो ज्ञातुं शक्तो न कोऽपि तत् ॥ ३२ ॥

संगीतसमयसारे चंद्रिकायां सुधाकरे ।
चूडामणिशिरोमण्यो रत्नाकरानुवर्तनम् ॥ ३३ ॥
अर्वाचीनैर्ग्रंथकारैर्दृश्यतेऽनुकृतो भृशम् ।
रत्नाकरस्वराध्यायो रागाध्यायस्त्वनादृतः ॥ ३४ ॥
दामोदरश्च सोमेशो रत्नाकरानुगावपि ।
रागाध्यायमपसार्य चक्रतुर्ग्रंथनिर्मितिम् ॥ ३५ ॥
अहोबलव्यंकटेशरामामात्यतुलाधिपाः ।
रागाख्याने स्वतंत्रास्ते दोषभाजो न मे मते ॥ ३६ ॥
पुंडरीको भावभट्टो मोषदेवस्तथैव च ।
लक्ष्यमार्गमनुसृत्य स्वस्वग्रंथानकुर्वत ॥ ३७ ॥
रागलक्षणकाराद्या अन्येपि लेखकाः स्फुटम् ।
विषये तत्र रागाणां स्वातंत्र्यं दर्शयंति ते ॥ ३८ ॥
श्रीमद्रत्नाकरप्रोक्तरागाध्यायाशयोऽखिलः ।
स्वश्लोकैर्ग्रथितः कैश्चिद्ग्रंथकारैरसंशयम् ॥ ३९ ॥
तथाप्येतैराशयोऽसाववबुद्धो यथार्थतः ।
इति तल्लेखतो नैव प्रतिभाति कथंचन ॥ ४० ॥
यद्गूढं तद्गूढतरभावं प्रापयितुं भृशम् ।
नैवोचितं कदाचित्स्याद्धीमतामिति मे मतिः ॥ ४१ ॥
प्राचीनशास्त्रे ह्यज्ञाते संगीतपरिवर्तनात् ।
वस्तुस्थितिरुदाहार्या ग्रंथकृद्भिरमायया ॥ ४२ ॥
परिवर्तनशीलं यत्संगीतं ग्रंथकर्तृभिः ।
प्राचीनं नष्टप्रायं तत्स्पष्टीकर्तुं न शक्यते ॥ ४३ ॥
नावश्यकं हि-तत्किंतु यया कयापि भाषया ।
तदसामंजस्यवृद्धिर्नेष्टेत्येव ब्रवीम्यहम् ॥ ४४ ॥
या रत्नाकरीयरागव्याख्योक्ता जातिमूर्छनाः ।
तदधीनग्रामरागमेला न क्वाप्यवेक्षिताः ॥ ४५ ॥
अज्ञाते ग्रामरागाणां मेले ग्रंथो निरर्थकः ।
यतस्ते जनका रागास्ततश्च रागविस्तरः ॥ ४६ ॥

रागादीनामुदीर्यंते नानाग्रंथेषु मूर्तयः ।
तत्र तेषां च रागाणां न स्वराद्युपलभ्यते ॥ ४७ ॥
संगीतदृष्ट्या ते ग्रंथाः केवलं निष्फला मताः ।
मेलाः कथं मूर्तितः स्युरित्यप्युल्लेखमर्हति ॥ ४८ ॥
हनूमन्मतमद्यापि प्रचरत्येव सर्वथा ।
इति प्रतिपादयंति बहवः पंडिता इह ॥ ४९ ॥
तथापि कस्तस्य ग्रंथः किं च तत्राभिधीयते ।
इत्येवं नैव स्वप्नेऽपि तेषां समुपलभ्यते ॥ ५० ॥
जाने नाक्षेप इष्टः स्याद्ग्रंथकारोक्तिषु क्वचित् ।
तथापि नार्थो वस्तुस्थित्या वृत्यास्तीति मे मतिः ॥ ५१ ॥
जातिप्रकरणस्योपयोगः सम्यक्तया तथा ।
यत्र स्पष्टतया चोक्तः स ग्रंथो नोपलभ्यते ॥ ५२ ॥
विद्यते ह्यभिमानो मे ग्रंथोपरि महत्तरः ।
नूनं परिश्रमोप्यत्र यथाशक्ति समादृतः ॥ ५३ ॥
रत्नाकरीयरागाणां मेलैरात्मीयमेलने ।
न यत्नो विहितः कैश्चिद्ग्रंथकृद्भिरिति स्फुटम् ॥ ५४ ॥
अतएव कीदृशास्ते रागाः स्युरिति तत्वतः ।
ज्ञातं तैरथ वा नेति शंकास्पदमिदं भवेत् ॥ ५५ ॥
ते तत्कालीनसगीतनिपुणाः स्युर्बुधास्तथा ।
नावश्यकतया रत्नाकरसंगीतकोविदाः ॥ ५६ ॥
न दर्पणादिग्रंथेषु समीचीनतया पुनः ।
मूर्छनानां विचारोऽपि कृतो रागेष्विति स्फुटम् ॥ ५७ ॥
रत्नाकराभिधं ग्रंथं पठतो यस्य कस्यचित् ।
पुरतः प्रस्फुरंत्येव प्रश्ना एवंविधा द्रुतम् ॥ ५८ ॥
श्रुतिजात्युपयोगः क्व क्रियेत नियमैश्च कैः ।
मेला आधुनिकाः के स्युर्मध्यमग्रामनामकाः ॥ ५९ ॥
मध्यमग्रामगा रागाः प्रचरंति नवाऽधुना ।
प्रचारेऽप्येकवाक्यत्वं भवेद्रत्नाकरेण किम् ॥ ६० ॥

ग्रामरागे साधारणप्रकरणस्य सर्वदा ।
उपयोगः कीदृशः स्यादिष्टः संगीतवेदिनाम् ॥ ६१ ॥
रत्नाकरे मृदुगनीग्राहा रागाः क ईरिताः ।
तीव्रमग्राहकाः के स्युः किंचात्र कारणं भवेत् ॥ ६२ ॥
के च त्रिंशद्ग्रामरागमेला रत्नाकरे स्थिताः ।
कथमेते च सिध्येयुरित्युदाह्रियतामिह ॥ ६३ ॥
यथार्थमूर्च्छनाटीका कल्लीनाथकृताऽस्ति किम् ।
तथात्वे कीदृशा मेलाः सिध्येयुरिति कथ्यताम् ॥ ६४ ॥
प्रतिरागमलंकारा नियताः किमितीर्यताम् ।
शुद्धतानरहस्यं च किमासीदित्युदीर्यताम् ॥ ६५ ॥
रागाध्याये किमित्येषामुल्लेखो नोपलभ्यते ।
केषुचिच्छुद्धतानेषु कुतः षड्जविवर्जनम् ॥ ६६ ॥
रागतत्स्त्र्यादिरचना तत्वमाश्रित्य किं कृता ।
रागमिश्रणमानानि तत्र ज्ञेयान्यथो कथम् ॥ ६७ ॥
मध्यमग्रामापेक्षाऽसीत्प्राक्कस्मात्साऽद्य नो कुतः ।
आसीत्तीव्रमरागेण संबंधः कश्चिदस्य किम् ॥ ६८ ॥
एवं स्युः कतिचित्प्रश्ना अर्वाचीनविदां हृदि ।
ज्ञानसामग्र्यभावे तु किं ते ब्रूयुस्तपस्विनः ॥ ६९ ॥
दुर्बोधांशं परित्यज्य प्रचारमनुसृत्य च ।
यत्तेषां ग्रंथनिर्माणं समीचीनं तदेव तु ॥ ७० ॥
स्वाभिप्रायं स्पष्टतया जानीयुः सकला जनाः ।
एतदर्थं लेखनं स्याद्ग्रंथानामित्यसंशयम् ॥ ७१ ॥
रागबोधश्चतुर्दंडी स्वरमेलकलानिधिः ।
सारामृतं चेति ग्रंथान् कुर्वाणा यांति धन्यताम् ॥ ७२ ॥
स्पष्टं प्रामाणिकतयाप्युक्तानि स्वमतानि तैः ।
अकारि च समीचीनं यत्प्रचारोऽनुलक्षितः ॥ ७३ ॥
ननु नावगताः सम्यग् ग्रंथास्त इति चेन्मतम् ।
तदास्मल्लेखजाद्वादादिष्टः स्यात्तत्त्वनिर्णयः ॥ ७४ ॥

संगीतं ग्रंथगं लक्ष्यगं भाविगमिति त्रिधा ।
ग्रंथगेंतर्गतं ह्यस्मत्कृतं भाषांतरं पृथक् ॥ ७५ ॥
यदिदानीं प्रचरति लक्ष्यसंगीतमेव तत् ।
एतावदेव ग्रंथेऽस्मिन्नान्यच्छास्त्ररहस्यकम् ॥ ७६ ॥
केनोपायेनाधुनिकं लक्ष्यसंगीतमाश्विदम् ।
अवगंतव्यमित्येव साध्यमत्र न संशयः ॥ ७७ ॥

गीतप्रशस्तिः, दर्पणे,

नादेन व्यज्यते वर्णः पदं वर्णात्पदाद्वचः ।
वचसो व्यवहारोऽयं नादाधीनमतो जगत् ॥ ७८ ॥

रत्नाकरे,

अज्ञातविषयास्वादो बालः पर्यंकिकागतः ।
रुदन्गीतामृतं पीत्वा हर्षोत्कर्षं प्रपद्यते ॥ ७९ ॥
वनेचरस्तृणाहारश्चित्रं मृगशिशुः पशुः ।
लुब्धो लुब्धकसंगीते गीते त्यजति जीवितम् ॥ ८० ॥

पारिजाते,

क्रुद्धो विषं वमन्सर्पः फणामांदोलयन्मुहुः ।
गानं जांगलिकाच्छ्रुत्वा हर्षोत्कर्षं प्रपद्यते ॥ ८१ ॥

दर्पणेऽपि,

पशुः शिशुर्मृगो वापि नादेन परितुष्यति ।
अतो नादस्य माहात्म्यं व्याख्यातुं केन शक्यते ॥ ८२ ॥
अखिलस्यास्य शास्त्रस्य नादो हि जीवितोपमः ।
तस्य द्वाविंशतिर्भेदाः संगीते श्रुतयो मताः ॥ ८३ ॥
नित्यं गीतोपयोगित्वमभिज्ञेयत्वमुत्तमम् ।
लक्ष्यमार्गे समादिष्टं पंडितैः श्रुतिलक्षणम् ॥ ८४ ॥

नादस्य मुख्यतो भेदास्त्रय एव प्रकीर्तिताः ।
मंद्रमध्यतारसंज्ञा लक्ष्यमार्गविशारदैः ॥ ८५ ॥

रत्नाकरे,

व्यवहारे त्वसौ त्रेधा हृदि मंद्रोऽभिधीयते ।
कंठे मध्यो मूर्ध्नि तारो द्विगुणश्चोत्तरोत्तरः ॥ ८६ ॥
प्रतिस्थानसंप्रसक्ता पूर्वोक्तश्रुतयो मताः ।
संगीतोक्तस्वराणां स्युरखिला जन्मभूरिमाः ॥ ८७ ॥
श्रुतिभ्यः स्युः स्वराः षड्जर्षभगांधारमध्यमाः ।
पंचमो धैवतश्चाथ निषाद इति सप्त ते ॥ ८८ ॥

श्रुतिवंटनप्रकारः,

चतुश्चतुश्चतुश्चैव षड्जमध्यमपंचमाः ।
द्वे द्वे निषादगांधारौ त्रिस्त्री रिषभधैवतौ ॥ ८९ ॥

श्रुतिनामानि,

तीव्रा कुमुद्वती मंदा छंदोवत्यस्तु षड्जगाः ।
दयावती तुरंज्ञेयां रंजनी रक्तिकेत्यमूः ॥ ९० ॥
रौद्री क्रोधीति गांधारे वज्रिकाथ प्रसारिणी ।
प्रीतिश्च मार्जनीत्येताः श्रुतयो मध्यमाश्रिताः ॥ ९१ ॥
क्षिती रक्ता च संदीपिन्यालापिन्यपि पंचमे ।
मदंती रोहिणी रम्येत्येतास्तिस्रस्तु धैवते ।
उग्रा च क्षोभिणीति द्वे निषादे वसतः श्रुती ॥ ९२ ॥
पुरातनैर्ग्रंथकारैर्वर्णिताः श्रुतयो ह्यमूः ।
द्वयोर्हि षड्जयोर्मध्ये मतं तासां सुवंटनम् ॥ ९३ ॥
यद्यपि द्वाविंशतिस्ते नादा इत्थं व्यवस्थिताः ।
प्रत्यक्षोपयोगिनस्ते सर्वे नैव कदाचन ॥ ९४ ॥

उपर्युक्तस्वराणा च संज्ञा लक्ष्ये प्रकीर्तिताः ।
सरिगमपधनीति ह्यपराः सर्वसंमताः ॥ ९५ ॥

प्राचीनस्वरव्यवस्थितिः, रत्नाकरे,

व्यवस्थिताः स्वराः प्राच्यैस्तत्र षड्जश्चतुःश्रुतिः ।
स्थाप्यः श्रुत्यां तृतीयायामृषभस्त्रिश्रुतिस्ततः ॥ ९६ ॥
पंचमीतस्तृतीयायां गांधारो द्विश्रुतिस्ततः ।
अष्टमीतो द्वितीयायां मध्यमोऽथ चतुःश्रुतिः ॥ ९७ ॥
दशमीतश्चतुर्थ्यां स्यात्पंचमोऽथ चतुःश्रुतिः ।
चतुर्दशीतस्तुर्यायां धैवतस्त्रिश्रुतिस्ततः ॥ ९८ ॥
अष्टादश्यास्तृतीयायां निषादो द्विश्रुतिस्ततः ।
एकविंश्या द्वितीयायामिति ग्रंथव्यवस्थितिः ॥ ९९ ॥

## श्रुतिस्वरसंकेतः, श्रुतिवीणादंडे,

## सर्वग्रंथकारसंमतं शुद्धस्वरस्थापनम्

| श्रुतयः | | शुद्धसप्तस्वराः |
|---|---|---|
| तीव्रा | १ | |
| कुमुद्वती | २ | |
| मंदा | ३ | |
| छंदोवती | ४ | षड्जः शुद्धः |
| दयावती | ५ | |
| रंजनी | ६ | |
| रक्तिका | ७ | रिषभः –,,– |
| रौद्री | ८ | |
| क्रोधी | ९ | गांधारः –,,– |
| वज्रिका | १० | |
| प्रसारिणी | ११ | |
| प्रीतिः | १२ | |
| मार्जनी | १३ | मध्यमः –,,– |
| क्षितिः | १४ | |
| रक्ता | १५ | |
| संदीपिनी | १६ | |
| आलापिनी | १७ | पंचमः –,,– |
| मदंती | १८ | |
| रोहिणी | १९ | |
| रम्या | २० | धैवतः –,,– |
| उग्रा | २१ | |
| क्षोभिणी | २२ | निषादः –,,– |
| तीव्रा | १ | |
| कुमुद्वती | २ | |
| मंदा | ३ | |
| छंदोवती | ४ | षड्जः –,,– |

संगीतसारामृते शुद्धस्वरमेलनिर्णयः ।

सर्वेषु रागमेलेषु मुखारीमेल आदिमः ।
शुद्धैः सप्तस्वरैर्युक्तो मुखारीमेल ईरितः ॥ १०० ॥
चतुश्चतुश्चतुश्चैव षड्जमध्यमपंचमाः ।
द्वे द्वे निषादगांधारौ त्रिस्त्री रिषभधैवतौ ॥ १०१ ॥
लोकप्रसिद्धनामायं शास्त्रसिद्धाभिधस्त्वसौ ।
शुद्धसाधारित इति तुलजेंद्रेण निश्चितः ॥ २ ॥
एनयैव व्यवस्थित्या ह्युत्पन्नः स्वरमेलकः ।
कनकांगीति संप्रोक्तः कर्णाटकीयपंडितैः ॥ ३ ॥
ग्रंथानां तत्र चाद्यानां शुद्धमेलो भवेदसौ ।
इति सर्वेपि जानंति मर्मज्ञा लक्ष्यवेदिनः ॥ ४ ॥
तयैव च व्यवस्थित्या शुद्धमेलः सुसाधितः ।
हरप्रियः समाख्यातो ह्यहोबलादिपंडितैः ॥ ५ ॥
हिंदुस्थानीयपद्धत्यां श्रुतिक्रमविपर्ययात् ।
शंकराभरणाख्यातो मेलः शुद्धः सुनिश्चितः ॥ ६ ॥
अत्र मेले मतः षड्जः प्रथमश्रुतिमाश्रितः ।
ग्रंथेषु दृश्यते सोऽपि चतुर्थ्यां स्थापितो बुधैः ॥ ७ ॥
केषुचिदपि ग्रंथेषु मृदुत्वं सपयोर्मतम् ।
हिंदुस्थानीयपद्धत्यां तौ स्वरौ त्वचलौ मतौ ॥ ८ ॥
शुद्धमेलो हि सर्वत्र षड्जग्राम इतीरितः ।
शंकराभरणस्तस्मात्षड्जग्रामत्वमर्हति ॥ ९ ॥

विकृतस्वरनिर्णयः ।

स्वरस्तु प्रच्युतः श्रुत्या नियताया यदा भवेत् ।
तदा तस्य विकृतत्वमंगीकुर्वंति पंडिताः ॥ ११० ॥
रिगमधनयो लक्ष्ये विकृताः संभवंति यत् ।
अथ तेषां विकारांस्तान्वर्णयामि सविस्तरम् ॥ ११ ॥

षड्जर्षभयोश्च मध्ये कोमलो रिषभः स्थितः ।
कोमलो धैवतश्चापि पधयोरंतरे पुनः ॥ १२ ॥

गांधारो रिगयोर्मध्ये संमतः कोमलाभिधः ।
निषादोऽपि धनीमध्ये मृदुसंज्ञः सुसंस्थितः ॥ १३ ॥

तीव्रमध्यमस्तु प्रोक्तो ह्यंतरे मपयोरपि ।
सर्वसंगीतवैचित्र्याधारभूतोऽतिरक्तिदः ॥ १४ ॥

प्राचीनविकृतसंज्ञाः ।

अथ वक्ष्ये ग्रंथसंज्ञा विकृतानां ततः क्रमात् ।
यतः स्याद्ग्रंथरागाणामनायासेन व्यक्तता ॥ १५ ॥

समपा लक्ष्यशुद्धास्ते ग्रंथेष्वपि तथैव च ।
कोमलौ तु रिधावत्र ग्रंथेषु शुद्धसंज्ञकौ ॥ १६ ॥

अस्माकं यः कोमलो गस्तत्र साधारणो मतः ।
तीव्रगांधारसंज्ञोऽत्र ग्रंथेषु चांतराभिधः ॥ १७ ॥

निषादस्तीव्रकोऽस्माकं भवेत्काकलिनामकः ।
कोमलो निर्व्यवहारे ग्रंथे स्यात्कैशिकाह्वयः ॥ १८ ॥

तीव्रमस्य ग्रंथसंज्ञा बहवः स्युः सुलक्षिताः ।
वराळीमः प्रतिमोऽपि कैशिकी पंचमो मृदुः ॥ १९ ॥

अस्मच्छुद्धरिधौ तत्र शुद्धौ स्यातां गनी क्रमात् ।
सौकर्यार्थं ततः कुर्वे वीणादंडे निदर्शनम् ॥ १२० ॥

## शुद्धविकृतस्वराणां वीणादंडे निदर्शनम् ।

शुद्धमतंत्र्यां

| | हिंदुस्थानीयपद्धत्यां स्वरनामानि. |
|---|---|
| १ | शुद्धमध्यमः, अथवा कोमलमध्यमः |
| २ | तीव्रमध्यमः |
| ३ | शुद्धपंचमः |
| ४ | कोमलधैवतः |
| ५ | शुद्धधैवतः, अथवा तीव्रधैवतः |
| ६ | कोमलनिषादः |
| ७ | तीव्रनिषादः, अथवा शुद्धनिषादः |
| ८ | शुद्धषड्जः |
| ९ | कोमलर्षभः |
| १० | शुद्धः ऋषभः, अथवा तीव्ररिषभः |
| ११ | कोमलगांधारः |
| १२ | शुद्धगांधारः, अथवा तीव्रगांधारः |
| १ | कोमलमध्यमः, अथवा शुद्धमध्यमः |
| २ | तीव्रमध्यमः |
| ३ | शुद्धपंचमः |
| ४ | कोमलधः |
| ५ | शुद्धधैवतः, अथवा तीव्रधः |
| ६ | कोमलनिः |
| ७ | तीव्रनिषादः, अथवा शुद्धनिः |
| ८ | शुद्धषड्जः |

च्युतौ षड्जमध्यमौ तावंतर्भूतौ मतौ बुधैः ।
काकल्यंतरयोर्लक्ष्ये सुप्रसिद्धं मतं त्विदम् ॥ २१ ॥

तथाहि स्वरमेलकलानिधौ,

च्युतमध्यमगांधारच्युतषड्जनिषादकौ ।
क्रमादंतरकाकल्योः स्थाने प्रतिनिधी विदुः ॥ २२ ॥

पुंडरीकविठ्ठलकृतरागमंजर्याम् ।

काकल्यंतरयोः स्थाने तृतीयगतिकौ निगौ ।
प्रयोगे च प्रतिनिधी क्रियेते सांप्रदायिकैः ।
स्वल्पप्रयोगः सर्वत्र काकली चांतरस्वरः ॥ २३ ॥

तत्र रागविबोधे द्वितीयविवेके संमतिः ।

श्रुत्यैकयाधिकत्वं न्यूनत्वं वा न दोषाय ॥ २४ ॥
लक्ष्यसंगीतोपयोगी योंऽशोऽन्यग्रंथगः स्वयम् ।
अध्यायेऽस्मिन्मयाप्यसौ यथायथमुदाहृतः ॥ २५ ॥
तद्गतस्यैवाशयस्य केवलं स्वीयभाषया ।
नास्त्यर्थो लेखनेनैवं कृतं प्राग्ग्रंथकर्तृभिः ॥ २६ ॥

## स्वराणां शुद्धत्वविकृतत्वविषये ग्रंथोक्तयः

रत्नाकरे,

शुद्धस्वरव्यवस्थितिः

तीव्रा कुमुद्वती मंदा छंदोवत्यस्तु षड्जगाः ।
दयावती रंजनी च रक्तिका चर्षभे स्थिताः ॥ २७ ॥
रौद्री क्रोधा च गांधारे वज्रिकाथ प्रसारिणी ।
प्रीतिश्च मार्जनीत्येताः श्रुतयो मध्यमाश्रिताः ॥ २८ ॥
क्षिती रक्ता च संदीपिन्यालापिन्यपि पंचमे ।
मदंती रोहिणी रम्येत्येतास्तिस्रस्तु धैवते ॥
उग्रा च क्षोभिणीति द्वे निषादे वसतः श्रुती ॥ २९ ॥

तदुक्तम् ।

श्रुतिभ्यः स्युः स्वराः षड्जर्षभगांधारमध्यमाः ।
पंचमो धैवतश्चाथ निषाद इति सप्त ते ।
तेषां संज्ञाः सरिगमपधनीत्यपरा मताः ॥ १३० ॥
ते मंद्रमध्यताराख्यस्थानभेदात्त्रिधा मताः ।
त एव विकृतावस्था द्वादश प्रतिपादिताः ॥ ३१ ॥

विकृतस्वराः ।

च्युतोऽच्युतो द्विधा षड्जो द्विश्रुतिर्विकृतो भवेत् ।
साधारणे काकलीत्वे निषादस्य च दृश्यते ॥ ३२ ॥
साधारणे श्रुतिं षाड्जीमृषभः संश्रितो यदा ।
चतुःश्रुतित्वमायाति तदैको विकृतो भवेत् ॥ ३३ ॥
साधारणे त्रिश्रुतिः स्यादंतरत्वे चतुःश्रुतिः ।
गांधार इति तद्भेदौ द्वौ निःशंकेन कीर्तितौ ॥ ३४ ॥
मध्यमः षड्जवद्द्वेधाऽन्तरसाधारणाश्रयात् ।
पंचमो मध्यमग्रामे विकृतः स्याच्चतुःश्रुतिः ॥ ३५ ॥
कैशिके काकलीत्वे च निषादस्त्रिचतुःश्रुतिः ।
प्राप्नोति विकृतौ भेदौ द्वाविति द्वादश स्मृताः ॥
तैः शुद्धैः सप्तभिः सार्धं भवंत्येकोनविंशतिः ॥ ३६ ॥

दर्पणे

शुद्धाः सप्तस्वरास्ते च मंद्रादिस्थानतस्त्रिधा ।
च्युताच्युतादिभेदेन विकृता द्वादशोदिताः ॥ ३७ ॥
चतुःश्रुतिर्यदा षड्जो द्विश्रुतिर्विकृतस्तदा ।
साधारणे च्युतः स स्यात्काकलीत्वेऽच्युतः स्मृतः ॥ ३८ ॥
त्रिश्रुतिर्ऋषभः साधारणे षाड्जीं श्रुतिं श्रितः ।
चतुःश्रुतित्वमापन्नस्तदैको विकृतो भवेत् ॥ ३९ ॥

साधारणे मध्यमस्य गांधारस्त्रिश्रुतिर्भवेत् ।
स्वस्यांतरत्वे भवति चतुःश्रुतिरिति द्विधा ॥ १४० ॥
च्युताच्युतादिभेदेन मध्यमः षड्जवद्भवेत् ।
साधारणेऽतरत्वे च द्विश्रुतिर्विकृतस्तदा ॥ ४१ ॥
पंचमो मध्यमग्रामे त्रिश्रुतिर्जायते स्वरः ।
मध्यमस्य श्रुतिं प्राप्य कैशिके तु चतुःश्रुतिः ॥ ४२ ॥
धैवतो मध्यमग्रामे विकृतः स्याच्चतुःश्रुतिः ।
कैशिके काकलीत्वे च निषादस्त्रिचतुःश्रुतिः ।
एतैश्च सप्तभिः शुद्धैर्भवंत्येकोनविंशतिः ॥ ४३ ॥
श्रुतिस्वरव्यवस्थिती रत्नाकरनिरूपिता ।
यथार्थतोऽनुक्तैव मन्ये संगीतदर्पणे ॥ ४४ ॥

## वीणादंडे, रत्नाकरगतश्रुतिस्वरनिदर्शनम् ।

### शुद्धषड्जतंत्र्याम्

| लक्ष्यगतस्वराः | ग्रंथोक्तस्वराः |
|---|---|
| शुद्धषड्जः | शुद्धषड्जः; अच्युतषड्जः |
| कोमलरिः | शुद्धरिः; विकृतरिः |
| शुद्धरिः | शुद्धगः |
| कोमलगः | साधारणगः |
| तीव्रगः | अंतरगः |
| | च्युतमः |
| शुद्धमः | शुद्धमः; अच्युतमः |
| तीव्रमः | कैशिकपः; विकृतपः |
| शुद्धपः | शुद्धपः |
| कोमलधः | शुद्धधः; विकृतधः |
| शुद्धधः | शुद्धनिः |
| कोमलनिः | कैशिकनिः |
| तीव्रनिः | काकलीनिः |
| | च्युतषड्जः |
| शुद्धषड्जः | शुद्धषड्जः |
| कोमलरिः | शुद्धरिः |
| शुद्धरिः | शुद्धगः |
| कोमलगः | साधारणगः |
| तीव्रगः | अंतरगः |
| शुद्धमः | शुद्धमः |

रागविबोधे, स्वरनिर्णयः

ऋषभस्तृतीयसार्यां गः पंचम्यां नवम्यां मः ॥ ४५ ॥
पस्तु त्रयोदशीस्थः षोडश्यष्टादशस्थितौ च धनी ।
द्वाविंशीस्थः षड्जो द्विगुणसमः पूर्वषड्जेन ॥ ४६ ॥
ध्वनिशुद्धिनिश्चयार्थं विकृतन्यर्थं च सश्चतुःश्रुतिकः ।
इति सप्तोक्ताः शुद्धा विकृतान्सप्तैव वच्मि सह नाम्ना ।
साधारणोऽतरश्च श्रुतिं श्रुती चैत्य गो मस्य ॥ ४७ ॥
निः कैशिकी च काकल्यथ सस्यैकां भजंश्च्युतां ते द्वे ।
निगमा मृदुपरसमपाः समपतृतीयश्रुतिस्थित्या ॥ ४८ ॥
द्वादशविकृतान्पूर्वे वदंति तत्र तु पृथक् पृथग्ध्वनितः ।
सप्तैव स्युर्भिन्ना न पंच यदिमे समध्वनयः ॥ ४९ ॥

यथाहि

न पृथक् शुद्धसमाभ्यामच्युतसमकौ चतुःश्रुती च रिधौ ।
शुद्धरिधाभ्यां विकृतस्त्रिश्रुतिपादपि चतुःश्रुतिपः ॥ ५० ॥
भिन्नो न चतुःश्रुतिधो निःशंकमतेपि कूटपुनरुक्तौ ।
तल्लक्षणतो भेदेप्यमीषु पंचसु न लक्ष्ये भित् ॥ ५१ ॥

प्राचीनोक्तविकृतेभ्योऽन्यानपि विकृतान्संभावयन्नाह

रिधयोः परश्रुतिगतेश्चतस्र इह पंच षट् तथा श्रुतयः ।
देशीरागेष्वभिवीक्ष्यंते च षट् तथा गमयोः ॥ ५२ ॥
इति तेषु संभवंति त्रयोऽन्य एभ्यो विलक्षणा विकृताः ।
पंचश्रुतिः शुचेर्गात्साधारणतश्च षट्श्रुतिकः ॥ ५३ ॥
रिर्नपृथक्तादृग्धो नेः कैशिकिनश्च षट्श्रुतेर्गो मात् ।
किंतूक्तरिधप्रमानां व्यवहृतये पृथगिमाः संज्ञाः ॥ ५४ ॥

टीकायाम्

पंचश्रुतिः रिः शुचेः शुद्धात् गात् गांधारात् । षट्श्रुति-
कश्च रिः साधारणतः साधारणाख्यविकृतगांधारात् ।
न पृथक् न भिन्नः, स एव स इत्यर्थः ॥
चपरं तादृक् पंचश्रुतिः षट्श्रुतिश्च धः धैवतः नेः

शुचेर्निषादात्, कैशिकिनश्च तदाख्यविकृतनिषादाच्च
क्रमेणेत्येव । षट्श्रुतिर्गः मात् शुचेर्मध्यमात् न पृथक् ।
पंचश्रुतिको रिः गांधार एव । षट्श्रुतिकश्च रिः साधारण एव ।
एवं पंचश्रुतिर्धो निषाद एव । षट्श्रुतिश्च धः कैशिक्येव ।

चतुःश्रुत्यादिप्रकाराणां रिधगमानां पृथक्संज्ञाः

तीव्रश्चतुःश्रुतित्वे पंचश्रुतिकत्व एव तीव्रतरः ।
षट्श्रुतिकत्वे तीव्रतम इति परं ता यथायोग्यम् ॥ ५५ ॥

टीकायाम् ।

चतुःश्रुतित्वे एव तीव्र इति रिधादीनां संज्ञेत्यर्थात् । एवं पंचश्रुतिकत्वषट्श्रुतिकत्वयोरेव तीव्रतरस्तीव्रतम इति च संज्ञेयम् । एवं सति गमयोरपि संज्ञात्रये प्राप्ते आह । परं ता इति । परंतु ताः संज्ञा यथायोग्यं यथार्हं गस्य मस्य च षट्श्रुतिकत्वे तीव्रतम इत्येकैव संज्ञा "नतु तीव्रतीव्रतरसंज्ञे" गस्य तु चतुःश्रुतिकत्वपंचश्रुतिकत्वयोः अंतरमृदुमसंज्ञयोः प्रवृत्तेः, मस्य तु चतुःश्रुतिकत्वस्याव्यभिचारात् पंचश्रुतिकत्वस्य चासंभवादित्यर्थः ।

## रागविबोधे, शुद्धविकृतस्वरनिर्णयः

| लक्ष्यसंगीते | | रागविबोधे | |
|---|---|---|---|
| शुद्धमः | ———— | शुद्धमध्यमः | |
| | ………… | …………तीव्रतममः | |
| तीव्रमः | ———— | मृदुपः | |
| शुद्धपः | ———— | शुद्धपः | |
| कोमलधः | ………… | शुद्धधैवतः | |
| | ………… | …………तीव्रधः | |
| तीव्रधः | ———— | तीव्रतरधः; शुद्धनिः | |
| कोमलनिः | ———— | कैशिकनिः; तीव्रतमधः | |
| तीव्रनिः | ———— | काकली निः | |
| | ………… | …………मृदुसः | |
| शुद्धषड्जः | ———— | शुद्धषड्जः | |
| कोमलरिः | ………… | शुद्धरिः | |
| | ………… | तीव्ररिः | } शुद्धगांधारः |
| शुद्धरिः | ———— | तीव्रतररिः | } शुद्धगांधारः |
| कोमलगः | ………… | तीव्रतमरिः | } शुद्धगांधारः; } साधारणगः |
| तीव्रगः | ———— | अंतरगः | } साधारणगः |
| | ………… | मृदुमः | } साधारणगः |
| शुद्धमः | ———— | शुद्धमः, तीव्रतमगः | } साधारणगः |
| | ………… | तीव्रतममः | |
| तीव्रमः | ———— | मृदुपः | |
| शुद्धपः | ———— | शुद्धपः | |
| कोमलधः | ………… | शुद्धधः | |
| | ………… | तीव्रधः | |
| तीव्रधः | ———— | तीव्रतरधः; शुद्धनिषादः | |
| कोमलनिः | ………… | कैशिकनिः; तीव्रतमधः | |
| तीव्रनिः | ———— | काकली निः | |
| | ………… | मृदुसः | |
| शुद्धसः | ———— | शुद्धसः | |

स्वरैरेतैर्वर्णितास्ते सर्वे मेला स्वग्रंथके ।
सोमनाथेन विदुषा स्फुटमेतत्तु तद्विदाम् ॥

## पूर्वापरस्वरैकवाक्यताप्रयत्नः

### स्वरमेलकलानिधौ.

चतुश्चतुश्चतुश्चैव षड्जमध्यमपंचमाः ।
द्वे द्वे निषादगांधारौ त्रिस्त्री रिषभधैवतौ ॥ ५६ ॥
एते षड्जादयः सप्त स्वराः शुद्धाः प्रकीर्तिताः ।
विकृताश्चैव सप्तैवेत्येवं सर्वे चतुर्दश ॥ ५७ ॥
ननु रत्नाकरे शार्ङ्गदेवेन विकृताः स्वराः ।
द्वादशोक्ताः कथं ते तु सप्तैव कथितास्त्वया ॥ ५८ ॥
सत्यं लक्षणतो भेदो द्वादशानामपीष्यते ।
शुद्धेभ्यस्तत्र भेदस्तु सप्तानामेव लक्षितः ॥ ५९ ॥
आधारश्रुतिसंत्यागात् ध्वनिभेदः प्रकीर्तितः ।
पंचानां, परिशिष्टानां स्वराणां विकृतात्मनाम् ॥ ६० ॥
पूर्वस्वरश्रुतिग्राहाद्वा पूर्वश्रुतिवर्जनात् ।
अपि लक्षणतो भेदे पूर्वोक्तश्रुतिसंहतेः ॥ ६१ ॥
आधारश्रुतिनिष्ठत्वाल्लक्ष्यभेदो न विद्यते ।
कथं न भेद इति चेत्स लक्ष्यतो निरूप्यते ॥ ६२ ॥
शुद्धषड्जादच्युतस्तु स षड्जो नैव भिद्यते ।
अच्युतो मध्यमः शुद्धान्मध्यमान्न भिदां भजेत् ॥ ६३ ॥
शुद्धर्षभाच्च विकृतो रिषभो न पृथग्भवेत् ।
विकृतो धैवतः शुद्धाद्धैवतान्नातिरिच्यते ॥ ६४ ॥
मध्यमश्रुत्युपादानाद्विकृतः पंचमस्तु यः ।
विकृतात्पंचमाच्चैव न कामप्यश्नुते भिदाम् ॥ ६५ ॥
तस्माच्चतुर्दशस्वेषु पूर्वोक्तिष्वेव पंचमः ।
अंतर्भूतो यतस्तस्मान्न पृथक्कथितो मया ॥ ६६ ॥
चतुर्दशस्वरेष्वेषु वक्ष्ये लक्ष्यानुसारतः ।
नामांतराणि केषांचिद्व्यवहारप्रसिद्धये ॥ ६७ ॥

च्युतषड्जस्वरो लक्ष्ये निषादत्वेन कीर्तितः ।
च्युतषड्जनिषादाभिधानं तस्य विधीयते ॥ ६८ ॥
च्युतस्य मध्यमस्यापि गांधारव्यवहारतः ।
च्युतमध्यमगांधारसंज्ञास्य क्रियते मया ॥ ६९ ॥
च्युतपंचम इत्याहुर्लोका, मध्यमसंज्ञया ।
अस्माभिः कथ्यते सोऽतश्च्युतपंचममध्यमः ॥ ७० ॥
लक्ष्ये तु कुत्रचिच्छुद्धगांधारस्थानमाश्रयन् ।
ऋषभः कीर्त्यतेऽस्माभिः पंचश्रुतिसमाह्वयः ॥ ७१ ॥
ससाधारणगांधारस्थानस्थो रिषभो यदि ।
लक्ष्यानुसारतः प्रोक्तस्ततः षट्श्रुतिनामकः ॥ ७२ ॥

## स्वरमेलकलानिधौ स्वरनिर्णयः

| लक्ष्ये स्वराः | कलानिधौ स्वराः |
| --- | --- |
| शुद्धमः | शुद्धमध्यमः |
| तीव्रमः | च्युतपंचममध्यमः |
| शुद्धपः | शुद्धपंचमः |
| कोमलधः | शुद्धधैवतः |
| शुद्धधः | पंचश्रुतिधैवतः; शुद्धनिषादः |
| कोमलनिः | कैशिकनिः; षट्श्रुतिनिषादः |
| तीव्रनिः | काकलीनिः |
| | ............च्युतषड्जनिषादः |
| शुद्धसः | शुद्धसः |
| कोमलरिः | शुद्धरिः |
| शुद्धरिः | पंचश्रुतिरिः; शुद्धगांधारः |
| कोमलगः | साधारणगः; षट्श्रुतिरिः |
| शुद्धगः | अंतरगः |
| | ........च्युतमध्यमगांधारः |
| शुद्धमः | शुद्धमः |
| तीव्रमः | च्युतपंचममध्यमः |
| शुद्धपः | शुद्धपः |
| कोमलधः | शुद्धधः |
| शुद्धधः | पंचश्रुतिधः; शुद्धनिः |
| कोमलनिः | कैशिकनिः; षट्श्रुतिधः |
| शुद्धनिः | काकलीनिः |
| | ............च्युतषड्जनिषादः |
| शुद्धषड्जः | शुद्धषड्जः |

चतुर्दंडिप्रकाशिकायां स्वरनिर्णयः

"चतुश्चतुश्चतुश्चैव षड्जमध्यमपंचमाः ।
द्वेद्वे निषादगांधारौ त्रिस्त्री रिषभधैवतौ ॥
इत्येवं भरतश्लोकसंख्यातश्रुतिशालिनः ॥ ७२ ॥
विकृतास्तु स्वराः पंचेत्यस्माभिरवधार्यते ।
रत्नाकरे तु निःशंको विकृतान् द्वादशस्वरान् ॥ ७३ ॥
अब्रवीत्केचन पुनः सप्ताहुर्विकृतिस्वरान् ।
सर्वमेतत्समालोच्य लक्ष्यमार्गानुसारतः ॥ ७४ ॥
स्वराः पंचैव विकृता इति सिद्धांतितं मया ।
तांश्च पंचस्वरान् सम्यग्विविच्य व्याहरामहे ॥ ७५ ॥
साधारणश्च गांधारो गांधारश्चांतराभिधः ।
द्वौ तौ च मध्यमक्षेत्रसंभूतौ विकृतौ स्वरौ ॥ ७६ ॥
वराळीमध्यमश्चैकः पंचमक्षेत्रसंभवः ।
षड्जक्षेत्रसमुद्भूतौ कैशिकीकाकलीस्वरौ ॥ ७७ ॥
एवमेते स्वराः पंच विकृता इति निर्णयः ।
आहत्य शुद्धविकृताः स्वरा द्वादश कीर्तिताः ॥ ७८ ॥"
ग्रंथेऽस्मिन् दृश्यते स्पष्टं द्वादशस्वरकल्पनम् ।
आधारः सर्वसंगीतमात्रस्य लक्ष्यवर्त्मनि ॥ ७९ ॥

संगीतसारामृते स्वरनिर्णयः ।

"अत्र श्रुतिप्रकरणे श्रुतिवीणोदिता मया ।
रत्नाकरानुसारेण स्वरवीणोच्यतेऽधुना ॥ ८० ॥
स्वरैर्या वाद्यते वीणा स्वरवीणेति गीयते ।
स्वराः षड्जादयः शुद्धाः सप्तैव परिकीर्तिताः ॥ ८१ ॥
विकृताः पंच मिलिता द्वादश प्रतिपादिताः ।
विभांति यत्र सा वीणा स्वरवीणेति निश्चयः ॥ ८२ ॥
अथास्यां पर्वसंवेशं वक्ष्ये वैणिकसंमतम् ।
सारण्यां मध्यषड्जाख्यतंत्र्या शुद्धर्षभो यथा ॥ ८३ ॥
स्यात्तथा सारिका स्थाप्या प्रथमाऽथ द्वितीयका ।
तत्तंत्र्या शुद्धगांधारसिध्यै स्थाप्या च सारिका ॥ ८४ ॥

तृतीया सारिका स्थाप्या तया तंत्र्या यथा स्फुटः ।
स्यात्साधारणगांधारः, स्थाप्या सारी चतुर्थिका ॥ ८५ ॥
अंतराख्यानगांधारस्तया तंत्र्या यथा भवेत् ।
शुद्धमध्यमसिध्यर्थं पंचमीं सारिकां ततः ॥ ८६ ॥
निवेश्यैव तया तंत्र्या षष्ठी स्थाप्याथ सारिका ।
यथा व्यक्तस्तया तंत्र्या वराळीमध्यमस्तथा ॥ ८७ ॥
मध्यस्थानस्वरा ह्येते जाताः स्युः षट्सु पर्वसु ॥ ८८ ॥
मंद्रपंचमशोभिन्या तंत्र्या चाथ तृतीयया ।
शुद्धश्च धैवतः शुद्धनिषादश्च ततः परम् ॥ ८९ ॥
कैशिक्याख्यनिषादश्च काकल्याख्यनिषादकः ।
षड्जः शुद्धर्षभश्चेति षट्स्वराः षट्सु पर्वसु ॥ ९० ॥
"स्वराः स्युः श्रुतिनिष्पन्नाः श्रुतिन्यूनाधिकत्वतः ।
एते बहुविधाः शुद्धा विकृता व्यावहारिकाः ॥ ९१ ॥
इति त्रिधा निगद्यंते तान् ब्रूमोऽत्र विशेषतः ।
षड्जाद्याः शुद्धशब्दाद्याः स्वराः शुद्धा इतीरिताः ॥ ९२ ॥
शुद्धषड्जस्तथा शुद्धर्षभ इत्यादिनामभिः ।
अत्रैते व्यवहर्तव्या विकृतास्तत्तदाख्यया ॥ ९३ ॥
ताभिस्तेऽत्र निरूप्यंते क्रमशो विकृतस्वराः ।
साधारणाख्यगांधारोंतरगांधार एव च ॥ ९४ ॥
पंचमोपांत्यश्रुतौ विकृतपंचममध्यमः ।
कैशिक्याख्यनिषादश्च काकल्याख्यनिषादकः ।
पंचैते विकृताः शुद्धैः स्वरैर्द्वादश कीर्तिताः ॥ ९५ ॥"

उपर्युक्तानां केषांचित्स्वराणां संज्ञांतराणि ।

विहाय स्वस्वसंज्ञा ये स्वरा अन्योन्यसंज्ञकाः ।
तेषां नामांतराण्यत्र विहितानीह तद्यथा ॥ ९६ ॥
शुद्धगांधार एवायं पंचश्रुत्यृषभाह्वयः ।
साधारणाख्यगांधारः षट्श्रुत्यृषभसंज्ञकः ॥ ९७ ॥
तथा शुद्धनिषादोऽपि स्याच्चतुःश्रुतिधैवतः ।
स्यात्कैशिकनिषादोऽपि तथा षट्श्रुतिधैवतः ।
लक्ष्यानुसारतस्त्वेतल्लौकिकं सुखबोधकम् ॥ ९८ ॥

## उपर्युक्तपर्वसंवेशनिदर्शनं वीणादंडे

| | षड्जाख्यतंत्री | पंचमाख्यतंत्री |
|---|---|---|
| शुद्धषड्जः | १ | |
| | २ | १ |
| | ३ | २ |
| | ४ | ३ |
| | ५ | ४ |
| | ६ | ५ |
| वराळीमः | ७ | ६ |

### स्पष्टीकरणम्

षड्जाख्यतंत्र्यां क्रमेण स्वराः — १ शुद्धषड्जः २ शुद्धरिः ३ शुद्धगः ४ साधारणगः ५ अन्तरगः ६ शुद्धमः ७ वराळीमः

पंचमाख्यतंत्र्यां क्रमेण स्वराः — १ शुद्धपंचमः २ शुद्धधः ३ शुद्धनिः ४ कैशिकनिः ५ काकलीनिः ६ शुद्धसः ७ शुद्धरिः

## सारामृते; चतुर्दंडिप्रकाशिकायां च स्वरनिर्णयः

| लक्ष्ये स्वराः | | उपर्युक्तग्रंथगतस्वराः |
|---|---|---|
| शुद्धमः | ———— | शुद्धमध्यमः |
| तीव्रमः | ———— | वराळीमध्यमः; विकृतपंचममध्यमः |
| शुद्धपः | ———— | शुद्धपंचमः |
| कोमलधः | ........ | शुद्धधैवतः |
| शुद्धधः | ———— | शुद्धनिषादः; चतुःश्रुतिधः; पंचश्रुतिधः |
| कोमलनिः | ———— | कैशिकनिषादः; षट्श्रुतिधः |
| तीव्रनिः | ———— | काकलीनिषादः |
| शुद्धसः | ———— | शुद्धषड्जः |
| कोमलरिः | ........ | शुद्धरिषभः |
| शुद्धरिः | ———— | शुद्धगांधारः; पंचश्रुतिरिः |
| कोमलगः | ........ | साधारणगः; षट्श्रुतिरिः |
| शुद्धगः | ———— | अंतरगः |
| शुद्धमः | ———— | शुद्धमः |
| तीव्रमः | ———— | वराळीमध्यमः |
| शुद्धपः | ———— | शुद्धपः |
| कोमलधः | ........ | शुद्धधः |
| शुद्धधः | ———— | शुद्धनिः; पंचश्रुतिधः; |
| कोमलनिः | ........ | कैशिकनिः; षट्श्रुतिधः |
| तीव्रनिः | ———— | काकलीनिः |
| शुद्धषड्जः | ———— | शुद्धषड्जः |

संगीतपारिजातगतस्वरप्रपंचः,

"शुद्धाः सप्त विकाराख्या द्व्यधिका विंशतिर्मताः ।
एकोनत्रिंशदुच्यंते ते सर्वे मिलिताः स्वराः ॥ ९९ ॥
सरी गमौ पधौ निश्च स्वरा इत्यपि संज्ञिताः ।
चतुःश्रुतिसमायुक्ताः स्वराः स्युः समपाभिधाः ॥ २०० ॥
गनी श्रुतिद्वयोपेतौ रिधौ त्रिश्रुतिकौ मतौ ।
स्वरः स्वोत्तरगामी चेत्तीव्रादिवचनोदितः ॥ १ ॥
स्वरोग्रिमश्रुतिं याति तीव्रसंज्ञां प्रयात्यसौ ।
स्वरोग्रिमश्रुतीयाति तदा तीव्रतरो भवेत् ॥ २ ॥
स्वरोग्रिमश्रुतीर्याति तर्हि तीव्रतमः स्मृतः ।
चतस्रः श्रुतयो यस्मिन्नधिकाः स्युर्यदा स्वरः ॥ ३ ॥
अतितीव्रतमाख्यां च प्राप्नोतीति बुधा जगुः ।
स्वरः पश्चान्निवृत्तश्चेत् कोमलादिभिरीरितः ॥ ४ ॥
एकश्रुतिपरित्यागात् स्वरः कोमलसंज्ञकः ।
श्रुतिद्वयपरित्यागात् पूर्वशब्देन मन्यते ॥ ५ ॥

तथापि

प्रत्यक्षरागवर्णनप्रसंगेऽहोबलः स्वयमेव प्राह,

"पूर्वकोमलतीव्रैश्च तथा तीव्रतरेण च ।
अतितीव्रतमेनैव सर्वे रागा उदीरिताः ॥ ६ ॥
रिं च पूर्वं तथा तीव्रं तीव्रतरं च गस्वरम् ।
तीव्रतमं तथा गं च मं च तीव्रं स्वरं तथा ॥ ७ ॥
मं च तीव्रतमं धं च पूर्वाख्यं तीव्रसंज्ञितम् ।
तीव्रतरं निषादं च तीव्रतमं च निस्वरम् ।
इत्येतांश्च दश त्यक्त्वा रागलक्षणमीरितम् ॥ ८०॥

सएव पुनः,

"ऋषभः शुद्ध एवासौ पूर्वगांधार इष्यते ।
गांधारः शुद्ध एवासौ रिस्तीव्रतर इष्यते ॥ ९ ॥
अतितीव्रतमो गः स्यान्मध्यमः शुद्ध एव हि ।
धैवतः शुद्ध एवासौ निषादः पूर्वसंज्ञकः॥ १० ॥

निषादः शुद्ध एवासौ धस्तीव्रतर इष्यते ।
एवं स्यात् सर्वयंत्रेषु स्वरस्थानस्य लक्षणम् ॥ ११ ॥

अतः

अहोबलेन विदुषा स्वरास्तु बहवो मताः ।
द्वादशानामेव लक्ष्ये प्रयोगः प्रायशः कृतः ॥ १२ ॥

वीणादंडे शुद्धविकृतस्वरस्थापनप्रकारः पारिजाते,

"स्वरस्य हेतुभूताया वीणायाश्चाक्षुषत्वतः ।
तत्र स्वरविबोधार्थं स्थानलक्षणमुच्यते ॥ १३ ॥
ध्वन्यवच्छिन्नवीणायां मध्ये तारकसः स्थितः ।
उभयोः षड्जयोर्मध्ये मध्यमं स्वरमाचरेत् ॥ १४ ॥
त्रिभागात्मकवीणायां पंचमः स्यात्तदग्रिमे ।
षड्जपंचमयोर्मध्ये गांधारस्य स्थितिर्भवेत् ॥ १५ ॥
सपयोः पूर्वभागे च स्थापनीयोऽथ रिस्वरः ।
सपयोर्मध्यदेशे तु धैवतं स्वरमाचरेत् ।
तत्रांशद्वयसंत्यागान्निषादस्य स्थितिर्भवेत् ॥ १६ ॥

इति शुद्धस्वराः,

भागत्रयान्विते मध्ये मेरोः ऋषभसंज्ञितात् ।
भागद्वयोत्तरं मेरोः कुर्यात् कोमलरिस्वरम् ॥ १७ ॥
मेरुधैवतयोर्मध्ये तीव्रगांधारमाचरेत् ।
भागत्रयविशिष्टेऽस्मिन् तीव्रगांधारषड्जयोः ।
पूर्वभागोत्तरं मध्ये मं तीव्रतममाचरेत् ॥ १८ ॥
भागत्रयान्विते मध्ये पंचमोत्तरषड्जयोः ।
कोमलो धैवतः स्थाप्यः पूर्वभागे मनीषिभिः ॥ १९ ॥
तथैव धसयोर्मध्ये भागत्रयसमन्विते ।
पूर्वभागद्वयादूर्ध्वं निषादं तीव्रमाचरेत् ॥ २० ॥

# पारिजातोक्तस्वराणां वीणादंडे निदर्शनम्

● शुद्धमतंत्र्यां

| लक्ष्ये स्वराः | पारिजातोक्तस्वराः |
|---|---|
| शुद्धमः | शुद्धमः, अतितीव्रतमगः |
| | तीव्रमः |
| तीव्रमः | तीव्रतरमः |
| | तीव्रतममः |
| शुद्धपः | शुद्धपः |
| | पूर्वधः |
| कोमलधः | कोमलधः |
| शुद्धधः | शुद्धधः; पूर्वनिषादः |
| | कोमलनिः; तीव्रधः |
| कोमलनिः | शुद्धनिः; तीव्रतरधः |
| तीव्रनिः | तीव्रनिः |
| | तीव्रतरनिः |
| | तीव्रतमनिः |
| शुद्धषड्जः | शुद्धषड्जः |
| | पूर्वरिः |
| कोमलरिः | कोमलरिः |
| शुद्धरिः | शुद्धरिः; पूर्वगः |
| | तीव्ररिः; कोमलगः |
| कोमलगः | शुद्धगः; तीव्रतररिः |
| तीव्रगः | तीव्रगः |
| | तीव्रतरगः |
| | तीव्रतमगः |
| शुद्धमः | शुद्धमः; अतितीव्रतमगः |
| | तीव्रमः |
| तीव्रमः | तीव्रतरमः |
| | तीव्रतममः |
| शुद्धमः | शुद्धपः |

## प्रचलितदाक्षिणात्यपद्धत्यां व्यवहृतस्वरनामानि.

| लक्ष्येऽत्र स्वराः, | | अधुनाप्रसिद्धदाक्षिणात्यस्वराः, |
|---|---|---|
| शुद्धमः | ———— | शुद्धमध्यमः |
| तीव्रमः | ———— | प्रतिमध्यमः; वराळीमः |
| शुद्धपः | ———— | शुद्धपंचमः |
| कोमलधः | ………… | शुद्धधैवतः |
| शुद्धधः | ———— | चतुःश्रुतिधः; पंचश्रुतिधः, शुद्धनिः |
| कोमलनिः | ———— | कैशिकनिः; षट्श्रुतिधः |
| तीव्रनिः | ———— | काकलीनिः |
| शुद्धषड्जः | ———— | शुद्धषड्जः |
| कोमलरिः | ………… | शुद्धरिः |
| शुद्धरिः | ———— | चतुःश्रुतिरिः; पंचश्रुतिरिः; शुद्धगः |
| कोमलगः | ………… | साधारणगः; षट्श्रुतिरिः |
| तीव्रगः | ———— | अंतरगः |
| शुद्धमः | ———— | शुद्धमः |
| तीव्रमः | ———— | प्रतिमः, वराळीमः |
| शुद्धपः | ———— | शुद्धपः |

ग्रामविचारः

विशिष्टश्रुतिविन्यासो ग्राम इत्यभिधीयते ।
तद्गौरवं पुरा चासीन्न तावद्दृश्यतेऽधुना ॥ २१ ॥
षड्जमध्यमगांधाराख्त्रयोग्रामा निरूपिताः ।
पुराणैस्तत्र चांत्यस्य लोप्यत्वं परिकल्पितम् ॥ २२ ॥
अपुराणैर्ग्रंथकारैर्लक्ष्यमार्गानुसारतः ।
एक एव षड्जग्रामः स्वीकृतो लक्ष्यकेऽधुना ॥ २३ ॥
प्रतिरागगतो मेलः पुरासीन्मूर्छनाश्रितः ।
ग्रामो हि मूर्च्छनाधारः स्वरांतरनियामकः ॥ २४ ॥
विकृतानां स्वराणां च तदासीद्घटनं मतम् ।
द्वयोस्तु ग्रामयोर्मध्ये न तदिहोपलभ्यते ॥ २५ ॥
तिरोधानं मध्यमस्य ग्रामस्य वर्णितं पुनः ।
अर्वाचीनेषु ग्रंथेषु दृश्यते सुपरिस्फुटम् ॥ २६ ॥

ग्रामपरिवर्तने ग्रंथोक्तयः

संगीतसारामृते,

"भरतेनोदिते शास्त्रे ग्रामौ द्वौ षड्जमध्यमौ ।
षड्जग्रामः पंचमे तु सप्तदश्यां श्रुतौ स्थिते ॥ २७ ॥
स्वरेऽस्मिन् पंचमे किंतु षोडशीं श्रुतिमास्थिते ।
तदैव मध्यमग्रामः सोऽत्र लक्ष्ये न दृश्यते ॥ २८ ॥
षड्जग्रामाश्रितान्रागान् सर्वे गायंति गायकाः ।
तस्मान्मुख्यतमः षड्जग्रामोऽसौ नैव मध्यमः ॥ २९ ॥"

चतुर्दंडिप्रकाशिकायाम्,

"ग्रामेष्वेतेषु गांधारग्रामो नास्ति महीतले ।
स्वर्गलोके वर्ततेऽसौ सर्वेषामेव संमतम् ॥ ३० ॥
अस्माभिर्मध्यमग्रामोऽप्यसत्प्राय इतीर्यते ।
तथाहि मध्यमग्रामे त्रिश्रुतिः पंचमः खलु ॥ ३१ ॥
वराळीमध्यमो जातः स पुनर्लक्ष्यवर्त्मनि ।
मध्यमादिप्रभृतिषु मध्यमग्रामजन्मसु ॥ ३२ ॥

रागेषु दृश्यते चैव वराळी मध्यमस्ततः।
अयुक्तो मध्यमग्रामो लक्ष्यमार्गविरोधतः ॥ ३३ ॥
एक एव ततः षड्जग्राम इत्यवधार्यते।
षड्जग्रामोद्भवा रागा इत्यनेन निरूपितं ॥ ३४ ॥ "

रागविबोधे तथैव

स्वांत्यश्रुतावुपांत्यश्रुतौ च सति पंचमे क्रमात् स स्यात्।
किंतु विकारो देश्यां न पंचमे तदिह स प्रथमः ॥ ३५ ॥

टिप्पनी.

प्राचीनैस्तत्र संगीतं विभक्तं ग्रामभेदतः।
दाक्षिणात्या अधुनापि कुर्वंति मध्यमाश्रितम् ॥ ३६ ॥
हिंदुस्थानीयपद्धत्यां वैचित्र्यं मध्यमस्य तत्।
सर्वसंगीतमात्रस्य स्वभावं सुप्रदर्शयेत् ॥ ३७ ॥
अतो मन्ये लक्ष्यकेऽत्र कस्मादपि च कारणात्।
ग्रामद्वयसंमिश्रणं लक्ष्यज्ञैर्दृश्यते कृतम् ॥ ३८ ॥
एकस्मिन्नेव ग्रामे हि प्रयोजनानुसारतः।
द्वयोरेव मध्यमयोः प्रयोगो न विसंगतः ॥ ३९ ॥
कोमलादिविकारास्ते संभवंत्येकग्रामके।
सुसंमतमिदं नूनं संगीते परिवर्तनम् ॥ ४० ॥
अस्माभिर्लक्ष्यसंगीतमवेक्ष्यमवशं स्वयम्।
अतिवर्तामहे ग्रंथानर्वाचीनान्यतोऽधुना ॥ ४१ ॥
संगीतांतर्गतग्रामत्रयान्नो द्वादश स्वराः।
मिलंत्याधुनिका एवं यदाहुर्लक्ष्यपंडिताः ॥ ४२ ॥
लक्ष्यदृष्ट्या समीचीनं स्पष्टीकरणमीदृशम्।
ग्रंथतोऽसंगतं त्वासीद्ग्रामतत्वं पृथक् तदा ॥ ४३ ॥
देशकालानुवर्तित्वात्संगीते परिवर्तनम्।
भवितव्यं तत्र चेति शास्त्रविदां सुसंमतम् ॥ ४४ ॥
ग्रंथोक्ता बहवो रागाः सांप्रतं परिवर्तिताः।
दृश्यन्ते स्वीकृता लक्ष्ये यतस्ते स्युः सुरक्तिदाः ॥ ४५ ॥

अस्मदीये च संगीते यवनैरप्यसंशयम् ।
नानाविधतया सद्यो विहितं परिवर्तनम् ॥ ४६ ॥
प्रमादादपि संमोहाद्ये रागा भ्रष्टतां गताः ।
लक्ष्ये स्युस्ते सुनियताः कर्तव्याः शास्त्रकोविदैः ॥ ४७ ॥

मेलप्रकरणम्

हिंदुस्थानीयपद्धत्यां स्वराः प्रोक्तास्तु द्वादश ।
उद्गमस्थानभूतास्ते रागाणामिति संमतम् ॥ ४८ ॥
सप्त शुद्धास्तु विकृताः पंच तत्र समीरिताः ।
योग्यमेलव्यवस्थित्या भवेयू रक्तिहेतवः ॥ ४९ ॥
सूक्ष्मस्वरप्रयोगाणां विधानं श्रूयते क्वचित् ।
ग्रंथोक्तनियमाभावात्तच्चर्चा वादमूलका ॥ ५० ॥
तत्राऽपि मत्कृताः केचिन्नियमा वांछिता यदि ।
कथयिष्यामि तान्नूनमन्यस्माच्च प्रसंगतः ॥ ५१ ॥
भिन्नश्रुतिसमायोगे परिणामोऽपि स्यात्पृथक् ।
विज्ञानं तु तथाप्येतच्छ्रोतृगणेऽतिदुर्लभम् ॥ ५२ ॥

मूर्च्छनाः

क्रमात्स्वराणां सप्तानामारोहश्चावरोहणम् ।
मूर्छनेत्युच्यते लक्ष्ये सैव स्याद्रागजन्मभूः ॥ ५३ ॥
प्राक्कालीनेषु ग्रंथेषु मूर्छनाः सप्त वर्णिताः ।
प्रतिग्रामसमासक्ता याभी रागाः समुत्थिताः ॥ ५४ ॥
भिन्नस्वरं समारभ्य सप्तस्वरप्रकल्पनात् ।
नूनं परिस्फुटा तत्र स्वरांतरप्रभिन्नता ॥ ५५ ॥
रत्नाकरादिग्रंथेषु मूर्छनाभिः प्रबोधिताः ।
रागमेला रहस्यं तत्सर्वेषां विदुषां मतम् ॥ ५६ ॥
आधुनिकेषु शास्त्रेषु रागमेलनिरूपणम् ।
तीव्रकोमलादिकाभिः संज्ञाभिः परिकल्पितम् ॥ ५७ ॥
मूर्छनं तु स्वरस्यैव गमकादिकसंज्ञितम् ।
स्वीकृतं लक्ष्यसंमत्या श्रोतृचित्तानुरंजकम् ॥ ५८ ॥

मूर्छनाप्रस्तारः

त्रैविध्यं स्वीकृतं तत्र मूर्छनाया मनीषिभिः ।
संपूर्णत्वं षाडवत्व मोडवत्वं तथैव च ॥ ५९ ॥
यतः सर्वे हि रागाख्या दृश्यन्ते मूर्छनाश्रिताः ।
त्रैविध्यं सुमतं तेषामपि शास्त्रे सुलक्षितम् ॥ ६० ॥
चतुःस्वरादिसंघाताञ्च रागोत्पत्तिसंभवः ।
इति शास्त्रविदां तत्वं सांप्रतं सर्वसंमतम् ॥ ६१ ॥
सरिगमपधनीति संगीते मेलको मतः ।
पर्यायो मूर्छनायास्तु सत्कृतो लक्ष्यवर्त्मनि ॥ ६२ ॥
सरिगमस्वरात्मकं मेले पूर्वांगमीप्सितम् ।
पधनिसस्वरैश्चापि संभवेदुत्तरांगकम् ॥ ६३ ॥
पूर्वांगे कोमलौ प्रोक्तौ स्वरौ रिगौ तथैव च ।
उत्तरांगे निधौ ज्ञेयौ रागावयवभूतकौ ॥ ६४ ॥
पूर्वांगे ह्यचलौ मान्यौ सुस्वरौ षड्जमध्यमौ ।
उत्तरांगे पसावपि लक्षितावचलौ पुनः ॥ ६५ ॥
रिगधनिस्वराणां च विकृतिभिर्निरूपिताः ।
प्रस्तारक्रियया लक्ष्ये मुख्यतो रागमेलकाः ॥ ६६ ॥
मेलज्ञानं विना मेलजन्यं ज्ञातुं न शक्यते ।
तस्मात्तन्मेलबोधार्थं तत्स्वरूपं निरूप्यते ॥ ६७ ॥

प्रस्तारक्रिया

सारामृते

"षड्ज आद्यस्तदुपरि चत्वारः क्रमशः स्वराः ।
ऋषभाख्यानकाश्चापि गांधाराख्यानकाश्च ते ॥ ६८ ॥
आद्यस्तत्र न गांधारश्चतुर्थो रिषभो नहि ।
ऋषभावपि गांधारौ द्वितीयकतृतीयकौ ॥ ६९ ॥
प्रथमादित्रयं ह्यत्र भवेदृषभसंज्ञकम् ।
द्वितीयादित्रयं चात्र गांधारसंज्ञितं भवेत्" ॥ ७० ॥

ऋषभादित्रयं चापि रारीरूसंज्ञितं यदि ।
गागीगूसंज्ञकं भूयाद्धांधारादित्रयं पुनः ॥ ७१ ॥
चतुर्ष्वेवं सुस्वरेषु षट् संज्ञाः पंडितैर्मताः ।
प्रस्तारस्य सुसिध्यर्थमित्यस्ति तद्विदां स्फुटम् ॥ ७२ ॥
एवं च पंचमाग्रेऽथ निवसत्सु चतुर्ष्वपि ।
धाधीधुनानिनवश्च संज्ञाषट्कं प्रकीर्तितम् ॥ ७३ ॥
उपर्युक्तेऽथ पूर्वांगे प्रस्तारक्रियया ध्रुवम् ।
षट्प्रकाराः संभवेयू रागोपयोगिनश्च ते ॥ ७४ ॥
सरागामा सरागीमा सरागुमा सरीगिमाः ।
सरीगुमा सरूगूमा इत्येते स्युः परिस्फुटाः ॥ ७५ ॥

## वीणादंडखंडे प्रस्तारक्रियानिदर्शनम् ।

| लक्ष्यगतस्वराः | | ग्रंथोक्तस्वराः | |
|---|---|---|---|
| शुद्धषड्जः | | शुद्धषड्जः, | |
| कोमलरिः | १ | शुद्धरिषभः | ( रा ) |
| शुद्धरिः | २ | पंचश्रुतिरिः, शुद्धगः; | ( री ) ( गा ) |
| कोमलगः | ३ | साधारणगः, षट्श्रुतिरिः; | ( रुः ) ( गी ) |
| तीव्रगः | ४ | अंतरगः, | ( गुः ) |
| शुद्धमः | | शुद्धमध्यमः ( मा ) | |

तथैव च,

| | | | |
|---|---|---|---|
| शुद्धपः | | शुद्धपंचमः | |
| कोमलधः | १ | शुद्धधैवतः, | ( धा ) |
| शुद्धधः | २ | पंचश्रुतिधः; शुद्धनिः; | ( धी ) ( ना ) |
| कोमलनिः | ३ | कैशिकनिः; षट्श्रुतिधः; | ( धुः ) ( नी ) |
| तीव्रनिः | ४ | काकलीनिः; | ( नुः ) |
| शुद्धषड्जः | | शुद्धषड्जः | |

उत्तरांगे त्वनेनैव न्यायेन चोद्भवंति हि ।
पधानासा पधानीसा पधानुसादिकाः पुनः ॥ ७६ ॥
द्वयोरप्यंगयोर्योगादुद्भूतः पूर्णमेलकः ।
रागजनकत्वमपि लोके तस्यैव युज्यते ॥ ७७ ॥
शुद्धमध्यमस्य संज्ञा मेति प्रोक्ताऽत्र पंडितैः ।
तीव्रमस्य पुनश्चोक्ता मीति भेदः परिस्फुटः ॥ ७८ ॥
प्रयोजनादुत्तरांगषट्कस्य प्रथमे दले ।
षट्त्रिंशन्मेलसंप्राप्तिर्भवेत्सद्यो न संशयः ॥ ७९ ॥
मासंज्ञमध्यमस्थाने मीसंज्ञो यदि मध्यमः ।
प्रयुज्येत तदा चान्यत्षट्त्रिंशन्मेलसंभवः ॥ ८० ॥
इति द्वासप्ततिः प्रोक्ता मेलसंख्या तु लक्ष्यके ।
सर्वरागाश्रयीभूता व्यंकटेश्वरनिर्मिता ॥ ८१ ॥

मूर्छनाया नव प्रकाराः

संपूर्णेभ्यश्च मेलेभ्यः षाडवौडवमार्गतः ।
ये प्रकाराः संभवंति तान्वक्ष्येऽथ सविस्तरम् ॥ ८२ ॥
आरोहे स्यात्सुसंपूर्णो, विलोमेऽपि तथैव च ।
स भवेत्प्रथमो भेदो द्वितीयः कथ्यतेऽधुना ॥ ८३ ॥
अनुलोमे तु संपूर्णो विलोमे षाडवः पुनः ।
तृतीयः पूर्ण आरोहे विलोमे चौडवो मतः ॥ ८४ ॥
षाडवो रोहणे यस्तु संपूर्णः स्याद्विलोमके ।
चतुर्थो वर्णितो भेदः पंचमः कथ्यते बुधैः ॥ ८५ ॥
आरोहणे षाडवत्वं विलोमके तथैव च ।
स्यात्षाडवौडवः षष्ठः सर्वत्रापि सुसंमतः ॥ ८६ ॥
औडवो रोहणे यस्तु संपूर्णश्च विलोमके ।
संमतः सप्तमो भेदो लक्ष्ये नित्यं सुखप्रदः ॥ ८७ ॥
आरोहणे चौडवः स्याद्विलोमे षाडवः पुनः ।
अष्टमो निश्चितस्तज्ज्ञैर्नवमः प्रोच्यतेऽधुना ॥ ८८ ॥

औडवो रोहणे नित्यमवरोहेऽपि चौडवः ।
इत्येते वर्णिता भेदाः सर्वरागाश्रया मया ॥ ८९ ॥
द्विसप्ततिर्मूर्छनास्ताः पूर्वमेव मयोदिताः ।
उपर्युक्ता नवभेदाः प्रत्येकस्या भवंति ते ॥ ९० ॥

शक्यरागसंख्यानिर्णयः

अथ कुर्वे प्रबोधार्थं जिज्ञासूनां निरूपणम् ।
मूर्छनागतरागाणां प्रस्फुटं च सविस्तरम् ॥ ९१ ॥
शुद्धस्वरमूर्छनाऽसौ शंकराभरणाभिधा ।
तत्र संभाव्यरागाणां कुर्मः संख्यानिदर्शनम् ॥ ९२ ॥
संपूर्णारोहावरोहप्रकार एक एव हि ।
संपूर्णषाडवास्तत्र षडेव संभवंति ते ॥ ९३ ॥
संपूर्णौडवकाश्चापि पंचदशमिताः पुनः ।
इति परिस्फुटं भूयादनायासेन तद्विदाम् ॥ ९४ ॥
षाडवारोहसंपन्ना विलोमे पूर्णतायुताः ।
षट्प्रकाराः संभवंति न तत्र कोऽपि संशयः ॥ ९५ ॥
षाडवारोहसंयुक्ता विलोमेऽपि च षाडवाः ।
षट्त्रिंशद्भेदकास्तत्र मन्यंते लक्ष्यकोविदैः ॥ ९६ ॥
षाडवौडवभेदास्तु नवतिः संप्रकीर्तिताः ।
पंचदशहताः षट् तें परिस्फुटमिदं पुनः ॥ ९७ ॥
औडवारोहसंपन्नाः संपूर्णा अवरोहणे ।
पंचदश प्रकारास्ते सर्वगुणिसुसंमताः ॥ ९८ ॥
औडवारोहसंयुक्ता विलोमे षाडवा अपि ।
नवतिमितप्रभेदा लक्ष्यज्ञैस्तत्र निश्चिताः ॥ ९९ ॥
औडवौडवभेदास्ते शरनेत्रकरा मताः ।
एकैकस्यां मूर्छनायां प्रकाराः संभवंति ते ॥ ३०० ॥

मूर्छनाप्रस्तारनिदर्शनम्.

"क्रमात्स्वराणां सप्तानामारोहश्चावरोहणम् ।"
मूर्छनेत्युच्यते शास्त्रे तद्भेदास्तु त्रयो मताः ॥

## शक्यभेदसंख्यानिर्णयः

### संपूर्ण—संपूर्णः १ प्रकारः

| | आरोहः | अवरोहः | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ | स रि ग म प ध नि | नी | ध | प | म | ग | रि | स |

### संपूर्णषाडवाः ६ प्रकाराः

| | आरोहः | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ | स रि ग म प ध नि | · | ध | प | म | ग | रि | स |
| २ | ———— ” ———— | नि | · | प | म | ग | रि | स |
| ३ | ———— ” ———— | नि | ध | · | म | ग | रि | स |
| ४ | ———— ” ———— | नि | ध | प | · | ग | रि | स |
| ५ | ———— ” ———— | नि | ध | प | म | · | रि | स |
| ६ | ———— ” ———— | नि | ध | प | म | ग | · | स |

### संपूर्णौडवाः १५ प्रकाराः

| | आरोहः | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ | स रि ग म प ध नि | · | · | प | म | ग | रि | स |
| २ | ———— ” ———— | · | ध | · | म | ग | रि | स |
| ३ | ———— ” ———— | · | ध | प | · | ग | रि | स |
| ४ | ———— ” ———— | · | ध | प | म | · | रि | स |
| ५ | ———— ” ———— | · | ध | प | म | ग | · | स |
| ६ | ———— ” ———— | नि | · | · | म | ग | रि | स |
| ७ | ———— ” ———— | नि | · | प | · | ग | रि | स |
| ८ | ———— ” ———— | नि | · | प | म | · | रि | स |
| ९ | ———— ” ———— | नि | · | प | म | ग | · | स |
| १० | ———— ” ———— | नि | ध | · | · | ग | रि | स |
| ११ | ———— ” ———— | नि | ध | · | म | · | रि | स |
| १२ | ———— ” ———— | नि | ध | · | म | ग | · | स |
| १३ | ———— ” ———— | नि | ध | प | · | · | रि | स |
| १४ | ———— ” ———— | नि | ध | प | · | ग | · | स |
| १५ | ———— ” ———— | नि | ध | प | म | · | · | स |

## षाडवसंपूर्णाः ६ प्रकाराः

| | आरोहः | | | | | | | अवरोहः |
|---|---|---|---|---|---|---|---|---|
| १ | स | रि | ग | म | प | ध | · | नि ध प म ग रि स |
| २ | स | रि | ग | म | प | · | नि | ,, |
| ३ | स | रि | ग | म | · | ध | नि | ,, |
| ४ | स | रि | ग | · | प | ध | नि | ,, |
| ५ | स | रि | · | म | प | ध | नि | ,, |
| ६ | स | · | ग | म | प | ध | नि | ,, |

## ओडवसंपूर्णाः १५ प्रकाराः

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ | स | रि | ग | म | प | · | · | नि ध प म ग रि स |
| २ | स | रि | ग | म | · | ध | · | ,, |
| ३ | स | रि | ग | · | प | ध | · | ,, |
| ४ | स | रि | · | म | प | ध | · | ,, |
| ५ | स | · | ग | म | प | ध | · | ,, |
| ६ | स | रि | ग | म | · | · | नि | ,, |
| ७ | स | रि | ग | · | प | · | नि | ,, |
| ८ | स | रि | · | म | प | · | नि | ,, |
| ९ | स | · | ग | म | प | · | नि | ,, |
| १० | स | रि | ग | · | · | ध | नि | ,, |
| ११ | स | रि | · | म | · | ध | नि | ,, |
| १२ | स | · | ग | म | · | ध | नि | ,, |
| १३ | स | रि | · | · | प | ध | नि | ,, |
| १४ | स | · | ग | · | प | ध | नि | ,, |
| १५ | स | · | · | म | प | ध | नि | ,, |

## षाडवषाडवाः ६×६=३६

| | आरोहः | अवरोहः |
|---|---|---|
| १ | स रि ग म प ध · | · ध प म ग रि स |
| २ | ” | नि · प म ग रि स |
| ३ | ” | नि ध · म ग रि स |
| ४ | ” | नि ध प · ग रि स |
| ५ | ” | नि ध प म · रि स |
| ६ | ” | नि ध प म ग · स |

---

| | आरोहः | अवरोहः |
|---|---|---|
| ७ | स रि ग म प · नि | · ध प म ग रि स |
| ८ | ” | नि · प म ग रि स |
| ९ | ” | नि ध · म ग रि स |
| १० | ” | नि ध प · ग रि स |
| ११ | ” | नि ध प म · रि स |
| १२ | ” | नि ध प म म · स |

---

| | आरोहः | अवरोहः |
|---|---|---|
| १३ | स रि ग म · ध नि | · ध प म ग रि स |
| १४ | ” | नि · प म ग रि स |
| १५ | ” | नि ध · म ग रि स |
| १६ | ” | नि ध प · ग रि स |

शेषं स्पष्टम्

षाडवौडवाः ६×१५=९०

| | आरोहः | अवरोहः |
|---|---|---|
| १ | स रि ग म प ध · | · · प म ग रि स |
| २ | ——— ” ——— | · ध · म ग रि स |
| ३ | ——— ” ——— | · ध प · ग रि स |
| ४ | ——— ” ——— | · ध प म · रि स |
| ५ | ——— ” ——— | · ध प म ग · स |
| ६ | ——— ” ——— | नि · · म ग रि स |
| ७ | ——— ” ——— | नि · प · ग रि स |
| ८ | ——— ” ——— | नि · प म · रि स |
| ९ | ——— ” ——— | नि · प म ग · स |
| १० | ——— ” ——— | नि ध · · ग रि स |
| ११ | ——— ” ——— | नि ध · म · रि स |
| १२ | ——— ” ——— | नि ध · म ग · स |
| १३ | ——— ” ——— | नि ध प · · रि स |
| १४ | ——— ” ——— | नि ध प · ग · स |
| १५ | ——— ” ——— | नि ध प म · · स |

द्वितीयषाडवारोहेण सह त एव पंचदशावरोहाः यथा,

| | आरोहः | अवरोहः |
|---|---|---|
| १६ | स रि ग म प · नि | · · प म ग रि स |
| १७ | ——— ” ——— | · ध · म ग रि स |
| १८ | ——— ” ——— | · ध प · ग रि स |

शेषं स्पष्टम्

पंचदशप्रकारैश्चेदौडवैः षाडवा युताः ।
खांकमिता भवेत्संख्या तादृशानामसंशयम् ॥ १ ॥
औडवौडवभेदास्ते शरनेत्रकरा मया ।
पूर्वमेव समाख्याताः पुनरुक्तिर्निरर्थिका ॥ २ ॥
एवं प्रतिमूर्छनायां शक्या मेलाः परिस्फुटाः ।
वेदवसुवेदमिताः सुनिश्चिता विचक्षणैः ॥ ३ ॥
द्विसप्ततिमेलकेषु न्यायेनानेन लक्षिताः ।
वसुवेदवसुवेदरामा रागा ततः पुनः ॥ ४ ॥
रागोत्पादनपद्धतिरियं कर्णाटदेशके ।
अधुनाऽपि सुप्रतीता भवेत्सर्वसुसंमता ॥ ५ ॥
हिंदुस्थानीयपद्धत्यां मार्गाः स्युरपरा अपि ।
निरूपिता लक्ष्यविद्भी रागोत्पादनहेतवः ॥ ६ ॥
आरोहणे चालितास्ते स्वरा न स्युर्विलोमके ।
अथवा तद्विपर्यासो जनयेद्रागभेदकम् ॥ ७ ॥
स्याद्रागोचितस्वरेषु विशिष्टा वक्रता पुनः ।
समानस्वरेष्वथवा वादिभेदाद्भवेद्भिदा ॥ ८ ॥
न रागाणां न तालानामंतः कुत्रापि विद्यते ।
इति यच्छ्रूयते लोके केवलं तद्यथार्थकम् ॥ ९ ॥

वस्तुस्थितिः

एतावती यदि संख्या रागाणां शास्त्रनिश्चिता ।
लक्ष्यमार्गे न ते सर्वे प्रतीता इति प्रस्फुटम् ॥ १० ॥
मेलसंख्या ग्रंथकृद्भिर्महत्योऽपि प्रपंचिताः ।
लक्ष्ये प्रसिद्धिवैधुर्याद्बहवस्ताह्युपेक्षिताः ॥ ११ ॥
आधुनिका गायका ये निष्णाता गानशास्त्रके ।
गायंतस्तत्र श्रूयंते क्वचिद्रागशतद्वयम् ॥ १२ ॥

## द्विसप्ततिमेलसमर्थनम्

### चतुर्दंडिप्रकाशिकायाम्

द्विसप्ततिमेलकानां निर्माता व्यंकटेश्वरः ।
स्वकीये ग्रंथके ब्रूते स्पष्टं तत्सृष्टिकारणम् ॥ १३ ॥
"ननु द्विसप्ततिर्मेला भवता परिकल्पिताः ।
प्रसिद्धाः पुनरेतेषु मेला कतिचिदेव हि ॥ १४ ॥
दृश्यंते नतु सर्वेऽपि तेन तत्कल्पनं वृथा ।
कल्पनागौरवन्यायादिति चेदिदमुच्यते ॥ १५ ॥
अनंताः खलु भेदास्ते देशस्था अपि मानवाः ।
तेषु सांगीतिकैरुच्चावचसंगीतकोविदैः ॥ १६ ॥
ये कल्पयिष्यमाणाश्च कल्प्यमानाश्च कल्पिताः ।
अस्मदादिभिरज्ञाता ये च शास्त्रैकगोचराः ॥ १७ ॥
ये च देशीयरागास्तद्रागसामान्यमेलकाः ।
संग्रहीतुं समुन्नीता एते मेला द्विसप्ततिः ॥
ततस्त्वेतेषु वैयर्थ्यशंका किंकारणं भवेत् ॥ १८ ॥"

---

रंजनाद्रागता नित्यं नियमो बुधसंमतः ।
सुरागाणामपि संख्या तेन मर्यादिता भवेत् ॥ १९ ॥

## प्राचीनरागलक्षणानि

### चतुर्दंडिप्रकाशिकायाम्

रंजयंति मनांसीति रागास्ते दशलक्षणाः ।
कीर्तिताः पूर्वग्रंथेषु लक्षणानि ब्रुवेऽधुना ॥ २० ॥
लक्षणानि दशोक्तानि लक्ष्यंते तावदादितः ।
ग्रहांशौ मंद्रतारौ च न्यासापन्यासकौ तथा ॥ २१ ॥
अथ संन्यासविन्यासौ बहुत्वं चाल्पता तथा ।
लक्षणानि दशैतानि रागाणां मुनयोऽब्रुवन् ॥ २२ ॥

लक्ष्ये

प्रारभ्यते येन गीतं स स्वरो ग्रहको मतः ।
गीतसमाप्तिकृन्न्यासो वर्ण्यते चांशकः पुनः ॥ २३ ॥
बहुशो गीयते येन स्वरेणांशः स कथ्यते ।
अंशस्वरस्त्वसावेव जीवस्वर इति स्मृतः ॥ २४ ॥
उक्तदशलक्षणानां नूनं स्याद्गौरवं पुरा ।
देश्यामिह पुनस्तेषां संमतं परिवर्तनम् ॥ २५ ॥
व्यवहारे लक्षणानां त्रयाणामेव वर्णनम् ।
दृश्यते कृतमाचार्यैर्वयं लक्ष्यानुवर्तिनः ॥ २६ ॥
ग्रहन्यासापन्यासानां नियमाः सांप्रतं हि ते ।
यथायोग्यं नैव लक्ष्ये दृश्यंत इति संमतम् ॥ २७ ॥

तथाहि कल्लिनाथटीकायाम्

येषां श्रुतिस्वरग्रामजात्यादि नियमो नहि ।
नानादेशगतिच्छाया देशीरागास्तु ते मताः ॥ २८ ॥
कामचारप्रवर्तित्वं देशीरागत्वलक्षणम् ।
नियमे तु सति तत्र मार्गत्वमनुलक्षितम् ॥ २९ ॥

सारामृते मतंगसंमतरागलक्षणानि

ग्रहांशतारमंद्राश्च न्यासापन्यासकौ तथा ।
अपि संन्यासविन्यासौ बहुत्वं चाल्पता तथा ॥ ३० ॥
लक्षणानि दशैतानि रागाणां मुनयोऽब्रुवन् ।
दशानामपि चैतेषां क्रमाल्लक्षणमुच्यते ॥ ३१ ॥
येनादौ गीयते गीते स्वरेण स भवेद्ग्रहः ।
बहुशो गीयते येन स्वरेणांशः स कथ्यते ॥ ३२ ॥
अंशः स्वरोप्यसावेव जीवस्वर इति स्मृतः ।
नीचैः स्वरेण यद्गानं स मंद्रस्वर उच्यते ॥ ३३ ॥
उच्चैः स्वरेण यद्गानं स तारस्वर उच्यते ।
न्यासस्वरः स कथितो येन गीतं समाप्यते ॥ ३४ ॥

अवांतरसमाप्तिं यो रागस्य वितनोति सः ।
अपन्यासः स स्मृतोऽन्यस्त्वात्यंतिकसमाप्तिकृत् ॥ ३५ ॥
इति भेदो भवेन्न्यासापन्यासस्वरयोर्द्वयोः ।
संन्यासो नाम गीताद्यखंडस्यैवसमाप्तिकृत् ॥ ३६ ॥
गीतखंडाद्यावयवस्यांते तिष्ठति स स्वरः ।
विन्यास,एतौ सन्यासविन्यासौ भरतादिभिः ॥
अंतर्भूतावपन्यासस्वर एवेति कीर्तितम् ॥ ३७ ॥
अलंघनं तदभ्यासो बहुत्वं द्विविधं मतम् ।
स्वरस्यास्पर्शनं यत्तलंघनं परिकीर्तितम् ॥ ३८ ॥
साकल्येन स्वरस्पर्शस्त्वलंघनमिति स्मृतम् ।
यदेकस्य स्वरस्यैव नैरंतर्येण वाथवा ॥ ३९ ॥
व्यवधानेन स्याद्भूयो भूयोप्युच्चारणं हि तत् ।
अभ्यास इति शंसंति बहुत्वं द्विविधं ततः ॥ ४० ॥
अल्पत्वं च द्विधा प्रोक्तमनभ्यासाच्च लंघनात् ।
पूर्वोक्ताभ्यासराहित्यमनभ्यासः प्रकीर्तितः ।
पूर्वोक्तालंघनाभावो लंघनं परिकीर्तितम् ॥ ४१ ॥

वादिसंवादिप्रकरणम्

प्रतिरागे लक्षितव्याश्चतुर्विधाः स्वरा बुधैः ।
वादिसंवाद्यनुवादिविवादिनश्च नित्यशः ॥ ४२ ॥
वादीस्वरस्त्वेक एव संवाद्यपि तथैव च ।
शेषाणामनुवादित्वं विवादी वर्जितस्वरः ॥ ४३ ॥

ग्रंथोक्तयः

रत्नाकरे,

चतुर्विधाः स्वरा वादी संवादी च विवाद्यपि ।
अनुवादी च वादी तु प्रयोगे बहुलः स्वरः ॥ ४४ ॥
श्रुतयो द्वादशाष्टौ वा ययोरंतरगोचराः ।
मिथः संवादिनौ तौ स्तो निगावन्यविवादिनौ ॥ ४५ ॥

रिधयोरेव वा स्यातां तौ तयोर्वा रिधावपि ।
शेषाणामनुवादित्वं वादी राजाऽत्र गीयते ॥ ४६ ॥
संवादी त्वनुसारित्वादस्यामात्योऽभिधीयते ।
विवादी विपरीतत्वाद्धीरैरुक्तो रिपूपमः ।
नृपामात्यानुसारित्वादनुवादी तु भृत्यवत् ॥ ४७ ॥

---

विवादिस्वरव्याख्याने रत्नाकरप्रपंचितम् ।
रहस्यं किंचिदप्यासीद्भिन्नं मर्मविदां मते ॥ ४८ ॥

पारिजाते

संगीतशास्त्रवेत्तारः प्रवदंति मुनीश्वराः ।
प्रयोगो बहुधा यस्य वादिनं तं स्वरं जगुः ॥ ४९ ॥
मिथः संवादिनौ तौ स्तः सपौ स्यातां पसौ तथा ।
न वादी नच संवादी न विवाद्यपि यः स्वरः ॥
सोऽनुवादीति विज्ञेयः सूक्ष्मदृष्ट्या विचक्षणैः ॥ ५० ॥
रक्तिविच्छेदहेतुत्वं यस्मिन्रागे तु यस्य तत् ।
तद्रागस्थस्वरैस्तस्य विवादित्वं भवेद्ध्रुवम् ॥ ५१ ॥

संगीतसमयसारे

"सप्तस्वराणां मध्येऽपि स्वरे यस्मिन्सुरागता ।
स जीवस्वर इत्युक्तो ह्यंशो वादीति कथ्यते ॥ ५२ ॥
जीवस्वरस्य सदृशः संवादीस्वर उच्यते ।
विवादी स्याद्विसदृशः सोऽनुवादी त्र्यात्मकः ॥ ५३ ॥
अनुवादिनि संवादिनि जीवस्वरके सदा कलाविद्भिः ।
बहुतमबहुतरबहवः कार्या रागा विलोमेन ॥ ५४ ॥
सुप्रयोगे विवादी सः स्वल्पः कार्योऽथवा पुनः ।
प्रच्छादनीयो लोप्यो वा मनाक् स्पर्शः स्वरस्य यः ॥
प्रच्छादनं तदेवाहुर्लोपः स्वरस्य निकृतिः ॥ ५५ ॥"
पुंडरीकविठ्ठलेन स्वग्रंथे प्रतिपादितम् ।
विवादी तु सदा त्याज्य इति मतं सुनिश्चितम् ॥ ५६ ॥

प्रयोगे बहुधावृत्तः स्वरो वादीति नामकः ।
रागस्य जीवभूतोऽसौ मन्यते गानकोविदैः ॥ ५७ ॥
प्रत्येकस्मिंस्तु रागेऽसौ वादी ह्यतिमहत्ववान् ।
निश्चायको रागनाम्नः समयस्यापि व्यंजकः ॥ ५८ ॥
विदग्धा गायका गीते विवादिनमपिस्वरम् ।
ईषत्स्पर्शचालनेन प्रदर्शयंति लक्ष्यके ॥ ५९ ॥
प्रायः स्वरं विवादिनं योजयंत्यवरोहणे ।
न तच्छास्त्रेऽपि दोषार्हं ग्रंथेषु नियमोऽह्यसौ ॥ ६० ॥
सुप्रमाणयुतो मन्ये विवाद्यपि सुरक्तिदः ।
यथेषत्कृष्णवर्णेन शुभ्रस्यातिविचित्रता ॥ ६१ ॥

संगीतसाधारणलक्षणम्

प्रातःकाले तथा सायं गेया रागास्तु ये मताः ।
संधिप्रकाशनामानो ह्यस्माभिरत्र लक्षिताः ॥ ६२ ॥
एतादृशेषु रूपेषु रमणीयत्वमिष्यते ।
कोमलत्वे रिधयोश्च तीव्रत्वे निगयोरपि ॥ ६३ ॥
सायंकालस्तीव्रमेण शुद्धमेन तथेतरः ।
प्रदश्यंते यथायोगं नियमोयं सुसंमतः ॥ ६४ ॥
संगीतस्य मुख्यवर्गास्त्रयः कैश्चित्समर्थिताः ।
स्वराणां विकृत्यधीना मर्मज्ञैः शास्त्रकोविदैः ॥ ६५ ॥
शुद्धस्वरसंमेलने प्रथमो भेदको भवेत् ।
रिधयोश्च कोमलत्वे द्वितीयोऽपि सुरक्तिदः ॥ ६६ ॥
मृदुत्वे निगयोर्नित्यं तृतीयः स्यात् स्वतंत्रकः ।
द्विरूपिणा मध्यमेन तत्र भेदास्तु षड्विधाः ॥ ६७ ॥
षट्स्वेतेष्वपि वर्गेषु लक्ष्यसंगीतविस्तरः ।
समावेशयितुं शक्य इति नूनं वदंति ते ॥ ६८ ॥

तानप्रकरणम्

विस्तार्यते येन रागः स तानः कथ्यते बुधैः ।
शुद्धकूटविभेदेन द्विविधास्ते सुलक्षिताः ॥ ६९ ॥
शुद्धतानरहस्यं तल्लक्ष्ये नेह परिस्फुटम् ।
इति तेषां समाख्यानं मन्येत्र निष्प्रयोजनम् ॥ ७० ॥
केचिद्वदंति तानेभ्य एतेभ्यो लक्ष्यवर्त्मनि ।
प्रसिद्धं रागत्रैविध्यं समुत्थितमसंशयम् ॥ ७१ ॥

चतुर्दंडिप्रकाशिकायाम्,

"तानो द्विधा शुद्धतानः कूटतान इति क्रमात् ।
एकैकरागमात्राभिव्यक्तिसंपादकस्तु यः ॥ ७२ ॥
स शुद्धतान इत्युक्तः कूटतानः स उच्यते ।
यस्तु रागद्वयस्फूर्तिः साधारणतया स्थितः ॥ ७३ ॥"
ग्रंथकारास्तु प्राचीनाः कस्माच्चिदपि कारणात् ।
प्रयोजनं लक्ष्यगामि न वदंति परिस्फुटम् ॥ ७४ ॥
चतुरशीतीति संख्या सुव्यक्ता सर्वसंमता ।
प्रस्तारो मूर्छनायाः स्यात्कदाचिदेतदुत्थितः ॥ ७५ ॥

कूटतानाः

रत्नाकरे

असंपूर्णाश्च संपूर्णा व्युत्क्रमोच्चारितस्वराः ।
मूर्छनाः कूटतानाः स्युस्तत्संख्यामभिदध्महे ॥ ७६ ॥
पूर्णाः पंचसहस्राणि चत्वारिंशद्युतानि तु ।
एकैकस्यां मूर्छनायां कूटतानाः सह क्रमैः ॥ ७७ ॥
स्युः षाडवानां विंशत्या सह सप्तशतानि तु ।
औडुवानां तु विंशत्या सहितं शतमिष्यते ॥ ७८ ॥
चतुःस्वराणां कूटानां चतुर्विंशतिरीरिताः ।
त्रिस्वराः षड्द्विस्वरौ द्वावेकस्त्वेकस्वरो मतः ॥ ७९ ॥
नियमोऽयं यथायोग्यं कल्पनीयो विचक्षणैः ।
प्रस्तारेऽपि मूर्छनाया उपर्युक्ते सविस्तरं ॥ ८० ॥

अंकानेकादिसप्तान्तानूर्ध्वमूर्ध्वं लिखेत्क्रमात्।
हते पूर्वेण पूर्वेण तेषु चांके परे परे ॥
एकस्वरादिसंख्या स्यात्क्रमेण प्रतिमूर्छनम् ॥ ८१ ॥

प्रस्तारनियमः रत्नाकरे

क्रमं न्यस्य स्वरः स्थाप्यः पूर्वः पूर्वः परादधः।
स चेदुपरि तत्पूर्वः पुरस्तूपरिवर्तिनः।
मूलक्रमक्रमात्पृष्ठे शेषाः प्रस्तार ईदृशः ॥ ८२ ॥

खंडमेरुः दर्पणे,

नष्टोद्दिष्टप्रबोधार्थं खंडमेरुरथोच्यते।
सप्तकोष्ठां लिखेदाद्यां पंक्तिमेकैककोष्ठतः ॥ ८३ ॥
हीनं तु पूर्वपूर्वं स्यात्पंक्तिषट्कमधो लिखेत्।
आद्यपंक्त्यादिकोष्ठे तु लिखेदेकं परेषु खम् ॥ ८४ ॥
द्वितीयपंक्तावप्येकमाद्यकोष्ठे लिखेद्बुधः।
परेषु पूर्वपूर्वांकं कोष्ठसंख्यागुणं न्यसेत् ॥ ८५ ॥
एवमेव लिखेदंकमधोऽधः पंक्तिकोष्ठके।
खंडमेरुरयं प्रोक्तो नष्टोद्दिष्टप्रबोधकः ॥ ८६ ॥

तदुपयोगः

वेद्यतानस्वरमितान्दत्वा तेष्वेव लोष्टकान्।
मूलक्रमं लिखित्वादावुद्दिष्टं तदधो लिखेत् ॥ ८७ ॥
स्वरान्मूलक्रमस्यांत्यात्पूर्वं यावतिथः स्वरः।
उद्दिष्टांत्यस्तावतिथे कोष्ठेऽधो लोष्टकं क्षिपेत् ॥ ८८ ॥
लोष्टचालनमंत्यात्स्यात्त्यक्त्वा लब्धं क्रमो भवेत्।
समश्चेदंतिमोंऽत्येन सोऽपि त्याज्यः प्रयत्नतः ॥ ८९ ॥
लोष्टकांत्यांकसंयोगादुद्दिष्टस्य मितिर्भवेत्।
संख्यया तु यदा रूपे पृष्टे नष्टं तदुच्यते ॥ ९० ॥
यैरंकैर्नष्टसंख्या स्यान्मौलिकांकसमन्वितैः।
नष्टतानस्वेरस्थानं तैर्ज्ञात्वा तं स्वरं लिखेत् ॥ ९१ ॥

क्रमोऽत्रापि च कर्तव्यो लब्धत्यागेन पूर्ववत् ।
तथैवात्र लिखेच्छिष्टमेवं नष्टोत्तरं वदेत् ॥ ९२ ॥
तानस्वरमितोर्ध्वाधः पंक्तिगांत्यांकमिश्रणात् ।
एकस्वरादितानानां संख्या संजायते स्फुटम् ॥ ९३ ॥

अलंकाराः

दर्पणे

विशिष्टं वर्णसंदर्भमलंकारं प्रचक्षते ।
एकैकस्यां मूर्छनायां त्रिषष्टिरुदिता बुधैः ॥ ९४ ॥

भरतः ( कल्लिनाथटीकायाम् )

शशिना रहितेव निशा विजलेव नदी लता विपुष्पेव ।
अविभूषितेव कांता गीतिरलंकारहीना स्यात् ॥ ९५ ॥

तत्प्रयोजनं रागविबोधे,

अलमेतेऽलंकारा रंजनलब्ध्यै स्वरावबोधाय ।
वर्णांगभ्यासाय च तदवश्यं पूर्वमभ्यस्याः ॥ ९६ ॥

ग्रंथोक्तसप्ततालाः

ध्रुवो मठ्यो रूपकश्च झंपस्त्रिपुट एव च ।
अठताल एकतालः सप्ततालाः प्रकीर्तिताः ॥ ९७ ॥

उपर्युक्ततालाश्रितालंकाराः

एतत्तालसमाश्रिता ह्यलंकारास्तु सप्त ते ।
अहोबलेन संप्रोक्ता पारिजाते स्वनिर्मितौ ॥ ९८ ॥
इंद्रनीलो महावज्रो निर्दोषः सीरकोकिलौ ।
आवर्तकः सदानंदस्तेषां संज्ञा भवंत्विमाः ॥ ९९ ॥

अन्येऽपि लक्ष्यगतालंकाराः

अन्येऽपि स्युरलंकारा नियतमुपयोगिनः ।
नव्यशिक्षार्थिवर्गस्य तान् प्रवक्ष्यामि नामतः ॥ ४०० ॥
भद्रो नंदो गात्रवर्णो बिंदुरभ्युच्छ्रयस्तथा ।
आक्षिप्तः प्रेंखितः श्येनस्त्रिवर्णो जववारिदौ ॥ १ ॥

शंखाक्षेपौ मताह्येते त्रयोदश सुलक्षणाः ।
संमत्याहोबलस्यैव संगृहीता मयात्र ते ॥ २ ॥
अलंकारलक्षणानि सुप्रसिद्धानि ग्रंथके ।
पारिजाते यतस्तेषां पुनरुक्तिर्निरर्थिका ॥ ३ ॥

रागजातयः

रागप्रसक्तांशकादीन् विवादिनः स्वरानपि ।
विचार्य शार्ङ्गदेवेन रागजातीः सुलक्षिताः ॥ ४ ॥
तदेव तत्वमालंब्य मन्येऽत्र शङ्कयाद्बुधः ।
वर्गीकर्तुं व्यवहारप्रसिद्धान् रागभेदकान् ॥ ५ ॥
इति श्रीलक्ष्यसंगीतप्रथमाध्याय ईरितः ।
चतुराख्येन भरतपूर्वखंडनिवासिना ॥ ४०६ ॥



# द्वितीयाध्यायः ।

अथ श्रीलक्ष्यसंगीतद्वितीयाध्याय ईर्यते ।
चतुराख्येन भरतपूर्वखंडनिवासिना ॥ १ ॥

### रागप्रकरणम्

दर्पणे,

योऽयं ध्वनिविशेषस्तु स्वरवर्णविभूषितः ।
रंजको जनचित्तानां स रागः कथ्यते बुधैः ॥ २ ॥
औडवः पंचभिः प्रोक्तः स्वरैः षड्भिश्च षाडवः ।
संपूर्णः सप्तभिर्ज्ञेय एवं रागस्त्रिधा मतः ॥ ३ ॥

### रागजनकमेलसंकेतः

द्विसप्ततिमेलकेषु त्यक्त्वाताननवश्यकान् ।
दिङ्मात्रानेव स्वीकुर्मो लक्ष्यमार्गोपयोगिनः ॥ ४ ॥
पर्यायो मेलशब्दस्य भाषायां "थाट" ईक्षितः ।
ग्रंथेषु केषुचित्तत्र संस्थितिरपि लक्ष्यते ॥ ५ ॥
प्रचरद्रूपसंगीतमखिलं स्यात्परिस्फुटम् ।
तन्मेलेषु समाविष्टमिति मर्मविदां मतम् ॥ ६ ॥
जन्यजनकमेलानां कल्पनं नैव गर्हितम् ।
प्राक्प्रसिद्धं त्विदमेव तत्वमासीत्सुसंमतम् ॥ ७ ॥
अस्मिन् ग्रंथे मेलकानां दशानां यत्प्रयोजनम् ।
तत्सौकर्याय संगीतद्रष्ट्या चाकारि केवलम् ॥ ८ ॥

### दशमेलवर्णनम्

अथ वक्ष्ये क्रमान्मेलान् दशसंख्यान् सविस्तरम् ।
लक्ष्यसंगीतपद्धत्या जीवभूतांश्च तत्वतः ॥ ९ ॥
शुद्धस्वरसमुद्भूतो वेलावलस्य मेलकः ।
शंकराभरणाख्योऽसौ पूर्वसूरिविनिश्चितः ॥ १० ॥

तस्मिन्नेव तीव्रमस्य स्वरस्य परिकल्पनात् ।
शेषशुद्धस्वरैस्तत्र कल्याणीमेलसंभवः ॥ ११ ॥
रिधौ तु कोमलौ यत्र गनी तीव्रौ च तीव्रमः ।
स्यात्पौरवीनामकोऽसौ संध्याकालोचितो ध्रुवम् ॥ १२ ॥
उपर्युक्ते तु मेले चेन्मध्यमः शुद्धसंज्ञकः ।
भैरवाख्यो नियतं स्यात् प्रथमप्रहरोचितः ॥ १३ ॥
प्रसिद्धा भैरवीमेले कोमला रिगधानयः ।
सूर्योदयात्परं गानं तन्मेलस्य सुसंमतम् ॥ १४ ॥
कोमला रिगधाश्चाथ मनी तीव्रौ स्वरावपि ।
लक्ष्यमार्गप्रसिद्धे स्युर्मेलके तोडिकाह्वये ॥ १५ ॥
कोमला निधगा यत्र शेषास्ते शुद्धसंज्ञिताः ।
यस्मिन्नासावरी मेलः स प्रोक्तो लक्ष्यवेदिभिः ॥ १६ ॥
कांभोजीमेलने संति शुद्धाः सरिगमापधाः ।
निस्वरे स्यात्कोमलत्वमपि प्रज्ञा ब्रुवंति ते ॥ १७ ॥
इत्येवं दश संप्रोक्ता लक्ष्यलक्षणसंगताः ।
सविस्तरं मया मेलाः सुमता रागहेतवः ॥ १८ ॥

### दशमेलनामनिर्देशः

कल्याणीमेलकस्त्वाद्यो बिलावल्या द्वितीयकः ।
खंमाजाख्यस्तृतीयः स्याद्भैरवस्य चतुर्थकः ॥ १९ ॥
पंचमो भैरवीनामा षष्ठस्त्वासावरीरितः ।
सप्तमस्तोडिकाह्वोऽपि पूर्व्यभिधोऽष्टमः स्मृतः ॥ २० ॥
नवमो मारवाभिज्ञो दशमः काफिसंज्ञितः ।
इत्येते दश मेलास्ते रागोत्पादनहेतवः ॥ २१ ॥

### तेषामेव ग्रंथसंज्ञाः

अत ऊर्ध्वं प्रवक्ष्यामि ग्रंथसंज्ञाः सविस्तरम् ।
जिज्ञासूनां भवेद्येन सौकर्यमविशंकितम् ॥ २२ ॥
कल्याणीमेलको लक्ष्ये ग्रंथेष्वपि तथैव च ।
भवेद्बिलावलीमेलः शंकराभरणाभिधः ॥ २३ ॥

खंमाजीमेलकोऽस्माकं ग्रंथे कांभोजिनामकः ।
लक्ष्यज्ञानां भैरवो यस्तत्र मालवगौडकः ॥ २४ ॥
भैरव्यासावरीमेलौ तोडीभैरविनामकौ ।
तोडिव्यपदिष्टमेलो वराळीनामकः पुनः ॥ २५ ॥
लक्ष्येऽत्र पूर्विसंज्ञो यस्तत्र स्यात्कामवर्द्धनः ।
मारवाख्यो लक्ष्यगतो ग्रंथेषु गमनश्रमः ॥ २६ ॥
काफिनामाऽऽधुनिकोऽपि तत्र श्रीरागसंज्ञितः ।
एवं जनकमेलानां संज्ञाः स्युर्ग्रंथसंमताः ॥ २७ ॥

टिप्पनी

शक्या नेतुं मेलसंख्या तत्रेषन्न्यूनतामसौ ।
तदूनत्वं तु रचनाकाठिन्याधिक्यमावहेत् ॥ २८ ॥
सरिगमपधाख्येषु शुद्धस्वरेषु केवलम् ।
प्रत्येकं षड्जभावेन कल्पितेषु यथाक्रमम् ॥ २९ ॥
बिलावली तथा काफी भैरवी यमनोऽप्यसौ ।
खमाज आसावरी चेत्येते मेलाः स्युरंजसा ॥ ३० ॥
शुद्धविकृतभिद्द्वारा ह्येतेषु स्यात् सपाटवम् ।
क्षमं समावेशयितुमस्मत्संगीतमुत्तमम् ॥ ३१ ॥
कदाचिदेवमेवास्मत्पंडितैः स्युः प्रकल्पिताः ।
केवलं मुख्यषड्रागा येन केनापि वर्त्मना ॥ ३२ ॥
सादृश्यमप्यसादृश्यमन्यरागगतं ततः ।
दृष्ट्वा तत्स्त्र्यादिनियमः कृत एतैरसंशयम् ॥ ३३ ॥
व्यवस्थैवं समीचीना किंत्वादावेकवाक्यता ।
रागरूपगताभीष्टा यतः प्रीतिः सतां भवेत् ॥ ३४ ॥
प्राचीनग्रंथकारैर्हि मुख्यरागाः षडीरिताः ।
दशमेलान्वयं ब्रूमो नात्र दोषोऽस्ति कश्चन ॥ ३५ ॥
तत्तद्ग्रंथैर्हि जनकसंख्या भिन्नाः प्रकल्पिताः ।
सारासारविचारज्ञैरेतज्ज्ञेयं यथोचितम् ॥ ३६ ॥
ग्रंथे चत्वारिंशच्छतरागनिरूपणाभिधे ।
नारदोक्ते दशसंख्याः पुंरागाः परिकल्पिताः ॥ ३७ ॥

जन्यरागनामानि,

कल्याणीमेले,

यमनः शुद्धकल्याणो भूपाली हंमिराह्वयः ।
केदारश्छायनाटश्च कामोदः श्यामसंज्ञितः ॥ ३८ ॥
हिंदोलो गौडसारंगो मालश्रीर्यमनी तथा ।
चंद्रकांतादिका एते रागाः कल्याणमेलजाः ॥ ३९ ॥

बिलावलमेले,

बिलावलो बिहागश्च देशिकारः पहाडिका ।
ककुभः शंकरा नट्टो माडोदेवगिरी पुनः ॥ ४० ॥
सर्पर्दाख्या गुणकेली शुक्ला नटबिलावली ।
हंसध्वनिस्तथैवापि लच्छाशाखो गुणिप्रियः ॥ ४१ ॥
कल्याणो हेमपूर्वः स्याद्दुर्गा शुद्धस्वरैर्युता ।
इत्येते संमता लक्ष्ये रागा वेलावलोत्थिताः ॥ ४२ ॥

खंमाजीमेले,

खंमाजश्चाथ झिंझूटी सोरटी देशनामकः ।
खंबावती तिलंगिका दुर्गा रागेश्वरी तथा ॥ ४३ ॥
जयावंती गौंडसंज्ञः कामोदस्तिलकाभिधः ।
बडहंसस्तथा गारा नारायणी सुलक्षणा ॥ ४४ ॥
प्रतापाद्यवराळी स्या न्नागाद्यापि स्वरावलिः ।
इत्येते कीर्तितास्तज्ज्ञैर्मेले खंमाजनामके ॥ ४५ ॥

भैरवमेले,

भैरवश्च कलिंगश्च रंजनी मेघपूर्विका ।
सौराष्ट्री जोगिया चैव रामकेली प्रभातकः ॥ ४६ ॥
विभासो गौर्यहीरी स्यात्पंचमो ललिताद्यकः ।
सावेरी चाथ बंगालो भैरवः शिवपूर्वकः ॥ ४७ ॥
आनंदभैरवोऽप्यत्र गुणक्रिया हिजेजकः ।
इत्येते भैरवान्मेलाज्जाता रागा बुधैर्मताः ॥ ४८ ॥

भैरवीमेले,

भैरवी मालकोशश्च ह्यासावरी धनाश्रिका ।
भूपालो झीलफो रागो जंगूलो मोटकी तथा ॥ ४९ ॥
शुद्धसामंतनामापि दाक्षिणात्यगुणिप्रियः ।
वसंताद्यमुखार्येतेरागा भैरविमेलजाः ॥ ५० ॥

आसावरीमेले,

आसावरी जौनपूरी देवगांधारझीलफौ ।
सिंधभैरविकासंज्ञा ह्यडाणाखटकौशिकाः ॥ ५१ ॥
दरबारीकानडाख्या देशिका विबुधप्रिया ।
आसावरीसुमेलोत्था रागा एते सुसंमताः ॥ ५२ ॥

तोडीमेले,

तोडी गुर्जरिकाप्यन्या मीयांतोडी तथैव च ।
दरबारी मूलतानी तोडीमेलसमुद्भवाः ॥ ५३ ॥

पूर्वीमेले,

पूर्वी गौरी तथा रेवा विभासो दीपकः पुनः ।
त्रिवेणी मालवी टंकी जेतश्रीश्च वसंतिका ॥ ५४ ॥
परजा क्षुद्रगीतार्हा धनाश्रीः पूरियाद्यका ।
श्रीरागः सुमताह्येते रागाः पूर्व्याः सुमेलने ॥ ५५ ॥

मारुवामेले,

मारुवा पूरिया चैव ललिता सोहनी तथा ।
वराटीजेतभंखारा विभासो भट्टिहारिका ॥ ५६ ॥
साजगीरी विचित्रासौ मालीगौरा गुणिप्रिया ।
मारुवाख्ये मता मेले रागा गानविशारदैः ॥ ५७ ॥

## काफीमेले

धना श्रीसैंधवीकाफीधानीभीमपलासिकाः ।
बहारो मध्यमादिश्च वागीश्वरी ह्युडाणकः ॥ ५८ ॥
हुसेनी मेघमल्लारो मीयांमल्लारनामकः ।
सुहा नीलांबरी सूरमल्लारः पटमंजरी ॥ ५९ ॥
प्रदीपकी शहाणा च देशाख्या हंसकंकणी ।
वृंदावनस्तथा पीलुः कौशिको नायकी पुनः ॥ ६० ॥
मीयांपूर्वकसारंगः सुग्राही स्यात् गुणिप्रिया ।
इत्येते काफिमेलोक्ताः स्मर्तव्या गायनोत्तमैः ॥ ६१ ॥

## कल्याणीमेले

### जन्यरागाः

#### इमनः

कल्याणीमेलसंजातः कल्याणइमनाभिधः ।
गांधारांशग्रहन्यासः सायंकालोचितो मतः ॥ १ ॥
केचिदेनं संगिरंति पारशीकप्रदेशजम् ।
अन्येऽस्मद्देशजमाहुर्बुधैः कार्योऽत्र निर्णयः ॥ २ ॥
पद्धत्यां दाक्षिणात्यानां नूनं तत्र प्रवर्तते ।
कल्याणो यमुनासंज्ञः सायंगेयो निवर्जितः ॥ ३ ॥
स्वरे गांधारकेऽप्यत्र न्यासः स्यादतिरक्तिदः ।
ईषत्स्पर्शः शुद्धमस्य लक्ष्ये दृष्टोऽवरोहणे ॥ ४ ॥
कल्याणे शास्त्रग्रंथोक्ते शुद्धमस्य प्रवेशनात् ।
कदाचिदिमनोत्पत्तिरिति नैव विसंगतम् ॥ ५ ॥
आलापयोग्यता ह्यस्य रागस्य बहुसंमता ।
पूर्णत्वसरलत्वाभ्यां गानं चास्य निरर्गलम् ॥ ६ ॥
कल्याणीमेलकन्यस्तरागभ्रष्टास्तु गायकाः ।
निश्चयेन पतंत्यत्र यतोऽसौ स्यात्तदाश्रयः ॥ ७ ॥
कल्याणीमेलजा रागा विभज्यंते त्रिधा पुनः ।
अमैकमद्विमा इति सौकर्यार्थं विचक्षणैः ॥ ८ ॥
द्विमध्यमेषु रागेषु मर्मज्ञैस्तत्र दृश्यते ।
ईषद्वेलावलस्पर्शः कौशल्यापन्हुतो ध्रुवम् ॥ ९ ॥
संधिप्रकाशरागाणां मृदुता रिधयोस्ततः ।
मेलमेनं समारभ्य तीव्रत्वे परिवर्तिता ॥ १० ॥
परिवर्तनमप्येतन्नूनं संतोषकारणम् ।
भिन्नरससमास्वादान्मनो हर्षं प्रपद्यते ॥ ११ ॥
द्रुतमध्यविलंबितलयैस्त्रिभिरलंकृतः ।
रागोऽयं नियतं लक्ष्ये सर्वेषां सुखमावहेत् ॥ १२ ॥
प्राधान्यं तत्र पूर्वांगे पूर्वरात्र्यां सुलक्षितम् ।
ततो गीतमध्यबिंदुश्चलतीव क्रमात्पुरः ॥ १३ ॥

मध्यरात्रिगतौ गन्यौ कोमलौ सर्वरक्तिदौ ।
अवगतं रहस्यं तत् सर्वैश्च मर्मवेदिभिः ॥ १४ ॥
कोमलत्वं तद्रिधयोस्तीव्रत्वं निगयोरपि ।
शेषयामसुप्रसक्तमुषःकालस्य दर्शकम् ॥ १५ ॥
तीव्रमस्य स्थितिस्तत्र रात्रिशेषप्रसूचिका ।
अपनयस्तु तस्यैव दिनोदयमुदीरयेत् ॥ १६ ॥
प्रतिमेलं केचिद्रागाः परमेलप्रसूचकाः ।
द्विरूपाणां स्वराणां च प्रयोगेण व्यवस्थिताः ॥ १७ ॥
प्रायो लक्ष्ये समीरितं नैवांशत्वं तु निस्वरे ।
संवादित्वं भवेत्तस्य नियतं दृष्टिगोचरम् ॥ १८ ॥
प्रकारा बहवोऽप्यत्र कल्याणस्य मता बुधैः ।
व्यवहारप्रसिद्धा ये संगृहीता मया पुनः ॥ १९ ॥

### शुद्धकल्याणः

कल्याणीमेलकोत्पन्नो रागोऽसौ मन्यते बुधैः ।
शुचिकल्याण इत्याह्व आरोहे मनिवर्जितः ॥ २० ॥
गांधारः सुमतो वादी कैश्चिदृषभ ईरितः ।
मंद्रमध्यस्वरैर्गीतो नियतं स्यात् सुखावहः ॥ २१ ॥
गवादित्वे सनियमं धैवतो मंत्रिसंनिभः ।
सत्यंशे रिषभे नूनं संवादी पंचमो भवेत् ॥ २२ ॥
न्यंशो गेयः सदा पूर्वं यमनादिति संमतम् ।
गांधारांशस्तत्परं स्यान्नियमो हि मनीषिणाम् ॥ २३ ॥
भूपाल्याः स्फुटभेदोऽस्य लक्ष्यते गुणिसंमतः ।
मनीहीनागांशकासावेतस्मिंस्तद्विरुध्यते ॥ २४ ॥
स्यातां विलोमके ह्यत्र स्वरौ यदि निमध्यमौ ।
घर्षणेनैव सुश्राव्यं कर्तव्यं तत्प्रदर्शनम् ॥ २५ ॥

### भूपाली

कल्याणीमेलसंजाता भूपाली बुधसंमता ।
आरोहे चावरोहेऽपि मनिहीना भवेत् सदा ॥ २६ ॥

गांधारः केवलं वादी धैवतोऽमात्य ईरितः ।
स्यादस्याः प्रकृतिः शुद्धकल्याणसदृशी ध्रुवम् ॥ २७ ॥
पूर्वांगस्य प्रधानत्वात् सायंगेयत्वमीक्षितम् ।
संपूर्णावरोहणोऽपि कल्याणोऽस्या भवेत्पृथक् ॥ २८ ॥
सत्युत्तरांगप्राधान्ये देशीकारः समुद्भवेत् ।
वादित्वाद्धैवतस्यैव वैलक्षण्यं प्रकाशयेत् ॥ २९ ॥
स्वरयोर्निमयोर्यत्र दौर्बल्यं लक्षितं भवेत् ।
संगतिर्गपयोः प्रायस्तत्र रक्तिं समावहेत् ॥ ३० ॥
मन्यूनो मोहनः शास्त्रे संध्याकालोचितः स्वयम् ।
कर्णाटकीयपद्धत्यां तन्नामैवाधुनापि सः ॥ ३१ ॥
भूपाली कुत्रचित्प्रोक्ता प्रातर्गेया च गांशका ।
रिगधकोमलान्यत्र मन्ये लक्ष्यविरोधि तत् ॥ ३२ ॥
गांधारोद्ग्राहसंपन्न आलापः सुमतो सताम् ।
विविधस्वस्थानकेषु सुगीतो रंजयेन्मनः ॥ ३३ ॥

सकलरागसाधारणालापलक्षणम्

रत्नाकरे,

ग्रहांशमंद्रताराणां न्यासापन्यासयोस्तथा ।
अल्पत्वस्य बहुत्वस्य षाडवौडुवयोरपि ।
अभिव्यक्तिर्यत्र दृष्टा स रागालाप उच्यते ॥ ३४ ॥

रूपकलक्षणम्

रूपकं तद्वदेव स्यात्पृथग्भूतविदारिकम् ॥ ३५ ॥

आक्षिप्तिकालक्षणम्

चंचत्पुटादितालेन मार्गत्रयविभूषिता ।
आक्षिप्तिका स्वरपदग्रथिता कथिता बुधैः ॥ ३६ ॥

कल्लिनाथटीकायाम्

"पृथग्भूता विच्छिद्य विच्छिद्य प्रयुक्तविदार्यो गीतखंडानि यस्मिन्निति रूपकम् । अपन्यासेष्वविरम्यैकाकारेण प्रवृत्त आलापः । स एवापन्यासेषु विरम्य विरम्य प्रवृत्तं रूपकम्"

चंचत्पुटादिमार्गतालाः प्रसिद्धाः । चित्रादयस्त्रयो मार्गा मार्गसंगीते प्रसिद्धाः ।

आलप्तिलक्षणम्

रागालपनमालप्तिः प्रकटीकरणं मतम् ।
सा द्विधा गदिता रागरूपकाभ्यां विशेषणात् ॥ ३७ ॥
रागालप्तिस्तु सा या स्यादनपेक्ष्यैव रूपकम् ।
स्वस्थानैः सा चतुर्भिः स्यादिति गीतविदो विदुः ॥ ३८ ॥

प्राचीनशास्त्रोक्तस्वस्थानानि

यत्रोपवेश्यते रागः स्वरे स्थायी स कथ्यते ।
ततश्चतुर्थो द्व्यर्धः स्यात्स्वरे तस्मादधस्तने ॥ ३९ ॥
चालनं मुखचालः स्यात्स्वस्थानं प्रथमं च तत् ।
द्व्यर्धस्वरे चालयित्वा न्यसनं तद्द्वितीयकम् ॥ ४० ॥
स्थायिस्वरादष्टमस्तु द्विगुणः परिकीर्तितः ।
द्व्यर्धद्विगुणयोर्मध्ये स्थिता अर्धस्थिताः स्वराः ॥ ४१ ॥
अर्धस्थिते चालयित्वा न्यसनं तु तृतीयकम् ।
द्विगुणे चालयित्वा तु स्थायिन्यासाच्चतुर्थकम् ॥
एभिश्चतुर्भिः स्वस्थानै रागालप्तिर्मता सताम् ॥ ४२ ॥

रागस्थापनाप्रकारः

स्तोकस्तोकैस्ततः स्थायैः प्रसन्नैर्बहुभंगिभिः ।
जीवस्वरव्याप्तिमुख्यै रागस्य स्थापना भवेत् ॥ ४३ ॥

टीकायाम्

जीवस्वरोंऽशस्वरः । उक्तस्वस्थानचतुष्टयप्रयुक्तायामालप्तावुक्तलक्षणैः स्वल्पै रागावयवैर्विस्तार्यमाणायामापाततोऽभिव्यक्तस्य रागस्य रागांतरसाधारणस्थायादिप्रयोगात्स्वरूपतिरोभावे सति किंचित्प्रतीयमानता भवेदित्यभिप्रायः ।

उदाहरणम्

यथा लोके सभां प्रत्यागच्छतो देवदत्तस्य स्वरूपेणाभिव्यक्तस्य ततः सभां प्रविश्योपविष्टस्य तस्य स्वसदृशरूपवेषभाषादिसांकर्यात्स्वरूपतिरोभावे सति यथा तस्य किंचित्प्रतीयमानत्वम् । यथा वा पृथगानीय भिन्नवर्णेषु मणिषु प्रोतस्य मुक्तामणेर्मण्यंतरच्छायोपरागात्स्वरूपतिरोभावे सति यथा तस्य किंचित्प्रतीयमानत्वं तद्वत् ।

### हंमीरः

कल्याणीनामके मेले हंमीरः प्रोच्यते बुधैः ।
गग्रहः पांशकः कैश्चिद्धैवतांशोऽपि लक्ष्यते ॥ ४४ ॥
धैवतेऽवधारणं यन्नैतद्वादित्वकारणम् ।
लक्ष्यगतं समालोच्य बुधः कुर्यात्स्वनिर्णयम् ॥ ४५ ॥
स्यादारोहे निदौर्बल्यमवरोहेऽपि गस्य तत् ।
सायंगेयं तथा पूर्णं वक्रं रूपं सतां मतम् ॥ ४६ ॥
मध्यमावत्र द्वौ ग्राह्यौ रोहण एव तीव्रमः ।
सरलत्वे रोहणस्य यमनः स्यात्सुनिश्चितम् ॥ ४७ ॥
संघाताद्गमधानां स्यादेतद्रूपं परिस्फुटम् ।
प्रायोऽनेनैव श्रोतारः कुर्वंति नामनिर्णयम् ॥ ४८ ॥
द्विमध्यमेषु रागेषु नियमः प्रायशो भवेत् ।
आरोहे स्यान्निदौर्बल्यं गदौर्बल्यं विपर्यये ॥ ४९ ॥
शुद्धकल्याणकेदारयमना मिश्रिता इह ।
इति केचिद्वर्णयंति व्यवहाराध्वनि ध्रुवम् ॥ ५० ॥

### केदारः

कल्याणीमेलके प्रोक्तः केदारो बहुसंमतः ।
शंकराभरणेऽप्यन्ये केचिदाहुर्विपश्चितः ॥ ५१ ॥
मद्वंद्वमिह संप्रोक्तं गौणत्वं तीव्रमे यदि ।
अंशत्वं शुद्धमेऽभीष्टं व्यस्तत्वं चापि तत्स्वरे ॥ ५२ ॥
रिगोनत्वं रोहणेस्यात् पूर्वांगे संमतं सताम् ।
असत्प्रायत्वमारोहे चावरोहे तु गस्यतत् ॥ ५३ ॥
पंगुत्वं यदि गांधारे निषादे नियमेन तत् ।
साधारणो दृश्यतेऽयं नियमो लक्ष्यवेदिनाम् ॥ ५४ ॥
प्रयोगेऽत्र मध्यमौ द्वौ सुयुक्तावतिरक्तिदौ ।
लक्षितं नैतदन्येषु बहुषु ललितं विना ॥ ५५ ॥
धमार्दवं रिधाल्पत्वं सोमनाथादिका विदुः ।
रागेऽस्मिंल्लक्ष्यरोधि तन्मतं नास्मत्सुसंमतम् ॥ ५६ ॥
पूर्वांगे रिगदौर्बल्यं यथोपरि निरूपितम् ।
तथैव चोत्तरांगेऽपि निधयोस्तत्सुनिश्चितम् ॥ ५७ ॥

हिंदोलः

कल्याणीमेलकोत्थः स्याद्धिंदोलः सर्वसंमतः ।
प्रातःकालप्रगेयोऽपि धांशको गांशकोऽथवा ॥ ५८ ॥
वादित्वं तद्गस्वरस्य प्रातर्नैव सुरक्तिदम् ।
इति केचिद्धस्य प्राहुः समीचीनं हि मे मते ॥ ५९ ॥
रिपयोरत्र लुप्तत्वादमात्यो गस्वरो भवेत् ।
अवरोहेण वर्णेन प्रायो गानं सुखावहम् ॥ ६० ॥
लक्ष्ये क्रमात्सगासक्ता रिमच्छायावरोहणे ।
न तन्मन्येऽतिदोषार्हं तत्रापि यत्सशास्त्रता ॥ ६१ ॥
केचिदेनं वर्णयंति भैरवस्यैव मेलने ।
आसावरीमेलनेऽन्ये लक्ष्यमार्गविरोधि तत् ॥ ६२ ॥
मालश्रीः पूरिया चैव वसंतीनामिका पुनः ।
अत्र रूपे संमिलंति मतमेतन्मनीषिणाम् ॥ ६३ ॥
सायंगेयत्वगांशत्वे प्रोक्ते कैश्चिद्विचक्षणैः ।
सुसंगतं तदपि स्याद्बुधः कुर्यात्स्वनिर्णयम् ॥ ६४ ॥

कामोदः

कल्याणीमेलके तत्र कामोदो विबुधप्रियः ।
द्विमध्यमप्रयोगेण लक्ष्येऽसौ स्याद्विमेलजः ॥ ६५ ॥
पंचमस्यैव वादित्वं विदुषामत्र संमतम् ।
अमात्यत्वं रिस्वरे स्याद्गवक्रमवरोहणे ॥ ६६ ॥
तीव्रमस्य प्रयोगोऽपि स्वल्प एवानुलोमके ।
निषादः स्यादसत्प्राय आरोहे तद्विदां मते ॥ ६७ ॥
रिपयोः संगतिर्नित्यं रागमेनं प्रकाशयेत् ।
रात्र्यां प्रथमके यामे गानं चास्य शुभं भवेत् ॥ ६८ ॥
गौडहंमीरसंयोगाद्रूपमेतत्सुलक्षितम् ।
कैश्चिल्लक्ष्ये न चाप्येतद्भाति मेऽतिविसंगतम् ॥ ६९ ॥
सोमनाथेन विदुषा कांबोदी कीर्तिता पुनः ।
शंकराभरणे मेले निषादेन विवर्जिता ॥ ७० ॥

मते च दाक्षिणात्यानां कामोदः पधवर्जितः ।
लक्ष्यरोधी भवेदत्र तेन नांगीकृतो मया ॥ ७१ ॥
रिवक्रत्वान्मधयोश्च संगत्यैवापि रोहणे ।
हंमीरो निश्चितं लक्ष्ये रागोऽस्माद्भेदमर्हति ॥ ७२ ॥

### छायानट्टः

स्यात् कल्याणीमेलकेऽपि छायानट्टोऽतिरंजकः ।
रिपसंवादसंपन्नः संध्याकालोचितः पुनः ॥ ७३ ॥
सुसंगतिरत्र प्रोक्ता पर्योश्चैव सुसंमता ।
पंचमादृषभे पातो नूनं स्यात् हृदयंगमः ॥ ७४ ॥
रागेऽस्मिन् गायकैः कैश्चिद्धैवतो ग्रह ईरितः ।
न्यसनंषड्जस्वरेऽपि मते तेषां सुनिश्चितम् ॥ ७५ ॥
आरोहणे तीव्रमस्य प्रयोगो दृश्यते कृतः ।
गवक्रं स्यादवरोहे नियमेन सतां मते ॥ ७६ ॥
कल्याणगौडहंमीरनटालैख्याः सुरागकाः ।
मिलंति च्छायनट्टेऽस्मिन्निति शंसंति केचन ॥ ७७ ॥
द्विमध्यमेषु रागेषु द्वितीयेऽवयवे पुनः ।
अंतरानामके नित्यं सादृश्यमवगम्यते ॥ ७८ ॥
अतस्तन्निवारणाय कुर्वंति लक्ष्यवेदिनः ।
पूर्वांगस्य पौनरुक्त्यं यथान्यायं सपाटवम् ॥ ७९ ॥

### श्यामः

कल्याणीमेलसंप्रोक्तः श्यामरागः सुसंमतः ।
कल्याणस्य प्रकारोयमिति कैश्चिदुदीर्यते ॥ ८० ॥
मध्यमावत्र द्वौ प्रोक्तौ लक्ष्यमार्गे विचक्षणैः ।
स्यात् षड्जस्यैव वादित्वं संवादित्वं तु मे स्वरे ॥ ८१ ॥
गायने चास्य रागस्य कामोदांगं स्फुटं भवेत् ।
निगाल्पत्वं तत्र दृष्टं नैवमत्र मते सताम् ॥ ८२ ॥
रिपयो रिमयोर्वापि संगती रक्तिदा भवेत् ।
आरोहणे धैवतस्य वर्जनं सुखमावहेत् ॥ ८३ ॥

कामं संगत्यात्र मयोंश्छायामल्लारिकोद्भवेत् ।
प्रस्फुटेन निषादेन गायकस्तां निवारयेत् ॥ ८४ ॥
ग्रंथेषु सामसंज्ञोऽपि क्वचिद्रागो निरूपितः ।
आरोहे गनिहीनोसाववरोहे निवर्जितः ॥ ८५ ॥
हंमीरगौडकेदारमेलनात् संभवेदयम् ।
इति केचित् संगिरंति पंडिता लक्ष्यवेदिनः ॥ ८६ ॥
केचिदन्ये रागमेनं संपूर्णं धांशकं विदुः ।
सायंगेयं रूपमेतदतोऽग्राह्यं मतं त्विदम् ॥ ८७ ॥

गौडसारंगः

कल्याणीमेलके ज्ञेयो गौडसारंगनामकः ।
अतिवक्रस्वरूपोऽपि द्वाभ्यां माभ्यां सुभूषितः ॥ ८८ ॥
मध्यान्हार्हो भवेन्न्यल्पो गवक्रश्चावरोहणे ।
वादित्वं स्याद्धैवतस्य संवादित्वं तु गे पुनः ॥ ८९ ॥
नूनं विसंगतं चास्य गानं माध्याह्निकं भवेत् ।
वादित्वं चेन्मतं गे तदिति धांशो मतो मया ॥ ९० ॥
तीव्रमध्यमस्य चास्मिन् गौणत्वं लक्ष्यते स्फुटम् ।
तेनैव स्यादयं कैश्चित् शंकराभरणे मतः ॥ ९१ ॥
केषुचित्तत्र ग्रंथेषु वीरशांतिरसाश्रितः ।
संपूर्णो वर्ण्यते गांशो गेयो मध्याह्नतः परम् ॥ ९२ ॥
नाटकेदारपूर्वीणां मेलनादयमुद्भवेत् ।
इति केचित् संगिरंति लक्ष्यमार्गविचक्षणाः ॥ ९३ ॥

मालश्रीः

कल्याणीमेलके तत्र मालश्रीर्गीयते बुधैः ।
पंचमांशग्रहन्यासा रिधहीनौडवा मता ॥ ९४ ॥
त्रिस्वैरा सगपैः कैश्चिदुच्यते लक्ष्यवर्त्मनि ।
नैव शास्त्रानुमतं तन्नात्र रागस्य संभवः ॥ ९५ ॥
पंचोनेभ्यः स्वरेभ्यश्च न स्याद्रागः कदाचन ।
जानंति पंडिताः सर्वे रहस्यमिदमद्भुतम् ॥ ९६ ॥
यद्यप्यत्र मनी मान्यौ स्वरसंख्याप्रपूरणे ।
असत्प्रायौ निश्चितं ताविति मतं तु तद्विदाम् ॥ ९७ ॥

गपयोरेव संगत्या भवेद्रागस्य व्यक्तता ।
बुधैरस्याः समादिष्टं गानं प्रथमयामके ॥ ९८ ॥
ग्रंथेषु मालवश्र्याख्या काफीमेले सुलक्षिता ।
नासावस्मल्लक्ष्यमार्गप्रसिद्धेति परिस्फुटम् ॥ ९९ ॥
धन्याश्रीधवलाजेता मिलंत्यस्यामिति क्वचित् ।
वर्णयंति पंडितास्ते लक्ष्यलक्षणकोविदाः ॥ १०० ॥

यमनी

कल्याणीनामके मेले यमनी लक्षिता बुधैः ।
वेलावल्याः प्रकारोयं स्वीकृतो यमनांगतः ॥ १ ॥
संपूर्णो गीयते प्रातर्द्विमध्यमसुभूषितः ।
मिथः संवादिनावत्र सपाविति मतं सताम् ॥ २ ॥
आरोहणे तीव्रमेण यमनांगं स्फुटं भवेत् ।
अवरोहे शुद्धमेन बुधस्तत्परिमार्जयेत् ॥ ३ ॥
अवरोहो बिलावल्याः सुप्रसिद्धो हि लक्ष्यके ।
सायंगेयेपि रागे चेत् प्रविष्टो हानिमाचरेत् ॥ ४ ॥
निषादे प्रायशो दृष्टं वक्रत्वमनुलोमके ।
अस्यामपि प्रसक्तं तद्भवेदिति सुसंमतम् ॥ ५ ॥

चंद्रकांतः

कल्याणीमेलके ख्यातश्चंद्रकांतो गुणिप्रियः ।
आरोहे मध्यमत्यक्तो ह्यवरोहे समग्रकः ॥ ६ ॥
गांधारस्यैव वादित्वं संध्याकालप्रसूचकम् ।
प्राधान्यं स्यात् सुनिश्चितं पूर्वांगेऽत्र सतां मते ॥ ७ ॥
अप्रसिद्धं त्विदं रूपमुद्धृतं गायकैः क्वचित् ।
शुद्धकल्याणसादृश्यं तत्रावगम्यते बुधैः ॥ ८ ॥

टिप्पनी

अभिन्नस्वरसंघाते केवलं वादिभेदतः ।
स्याद्भिन्नरूपरागाणां संभव इति मे मतिः ॥ ९ ॥
पूर्वांगस्यैव प्राबल्यं पूर्वरात्र्यां प्रकीर्तितम् ।
तीव्रमस्तु सदैवात्र ह्यध्वदर्शित्वमाचरेत् ॥ ११० ॥

## बिलावलमेले,

### बिलावली.

शंकराभरणे मेले रागो वेलावलः स्मृतः ।
षड्जांशको बुधैः प्रोक्तो धैवतांशोऽपि संमतः ॥ १ ॥
आरोहणं भवेत्तत्र मन्यल्पस्वरसंयुतम् ।
अस्य गानं मतं प्रातरुत्तरांगप्रधानकम् ॥ २ ॥
प्रातःकालीयकल्याण इति केचिद्वदंत्यमुम् ।
अवरोहे गदौर्बल्यं कल्याणं च निवारयेत् ॥ ३ ॥
धमयोः संगतिस्तत्र नित्यं वैचित्र्यकारिणी ।
आरोहे तु निवक्रत्वं केषांचित्सुमतं सताम् ॥ ४ ॥
उत्तरांगप्रधानत्वाद्वैचित्र्यमपि तत्र तत् ।
प्रायेणोत्तररागास्ते प्रभवंत्यवरोहणे ॥ ५ ॥
प्रकारा बहवस्तत्र वेलावलस्य कीर्तिताः ।
प्रसिद्धा लक्ष्यमार्गे ये संगृहीता मयात्र ते ॥ ६ ॥

### बिहागः

वेलावलस्य संमेलाज्जातो रागः सुनामकः ।
बिहाग इति विख्यातो गांधारांशग्रहो मतः ॥ ७ ॥
आरोहे रिधवर्ज्यं स्यादवरोहे समग्रकम् ।
रात्र्यां द्वितीयके यामे गानं तस्य सुसंमतम् ॥ ८ ॥
रिधयोः सति प्राबल्ये स्याद्बिलावलशंकनम् ।
अतो गायकोत्तमैस्तौ लक्षितौ दुर्बलौ स्वरौ ॥ ९ ॥
अपन्यासो निस्वरस्य नूनं स्यादतिरक्तिदः ।
प्रायस्तत्रापि कुर्वंति श्रोतारो रागनिर्णयम् ॥ १० ॥
बिहागडे मतः कैश्चित्प्रयोगः कोमलस्य नेः ।
विलोमके प्राहुरन्ये द्विमध्यमप्रयोजनम् ॥ ११ ॥

### शंकरा

शंकरा षाडवा प्रोक्ता मस्वरेण विवर्जिता ।
शंकराभरणे मेले रात्र्यां द्वितीययामके ॥ १२ ॥

रिमवर्जा चौडवापि दृश्यते लक्ष्यवर्त्मनि ।
षड्जो गो वा भवेद्वादी बिहागांगेन मंडनम् ॥ १३ ॥
उत्तरांगप्रधानत्वे केचिदेनां सुरागिणीम् ।
प्रातर्गेयामपि प्राहुस्तारषड्जसुभूषिताम् ॥ १४ ॥
गानमस्या यतो दृष्टं रात्र्यामधिकसंमतम् ।
मानमर्हेत्तदेवात्र लक्ष्यमार्गानुवर्तनात् ॥ १५ ॥
मध्यमस्य लंघनेन बिहागाद्भित्परिस्फुटा ।
गांधारस्यापि वादित्वे गानं रात्र्यां न दूषितम् ॥ १६ ॥

देशीकारः

शंकराभरणान्मेलाद्देशीकारः प्रजायते ।
औडवो मनिवर्जः स्यात्प्रथमे यामके दिने ॥ १७ ॥
धैवतस्यात्र वादित्वं पंचमे न्यास उच्यते ।
उत्तरांगप्रधानोऽयं प्रातःकाले प्रगीयते ॥ १८ ॥
केचिदाहू रूपमेतद्विभासस्य सुनिश्चितम् ।
विभांशुको मतोऽस्मद्भिर्मेले मालवगौडके ॥ १९ ॥
विभांशुक इति नाम प्रस्फुटं सवितुर्यतः ।
गानं तस्यापि रागस्य मतं भानूदयात्परम् ॥ २० ॥
संध्याकाले यथा प्रोक्ता भूपाली गांशका बुधैः ।
देशीकारो भवेदत्र प्रातःकाले सुधांशकः ॥ २१ ॥
केचिदन्ये वदंत्येनं पूर्वीमेलसमाश्रितम् ।
मध्याह्नार्हं कंप्रमानिं वयं लक्ष्यानुवर्तिनः ॥ २२ ॥

पाहाडिः

शंकराभरणे मेले पाहाडिर्गीयतेऽधुना ।
मंद्रमध्यस्वरैश्चापि संमता सार्वकालिका ॥ २३ ॥
षड्जपंचमयोरत्र संवादो रुचिरो मतः ।
मंद्रस्थो धैवतो नूनं वैचित्र्यं प्रतनोति सः ॥ २४ ॥
भूपाल्याः प्रकृतिं धत्ते गानमस्या यतोऽशतः ।
स्पर्शः शुद्धमध्यमस्यानुमतो लक्ष्यवेदिनाम् ॥ २५ ॥

ग्रंथेषु केषुचित्पाडी प्रोक्ता मालवगौडके ।
व्यवहाराध्वनि नैषा तत्स्वरैरत्र गीयते ॥ २६ ॥
खंमाजी मेलकेऽप्येनां केचिदाहुर्निकोमलाम् ।
न तन्मन्ये सुसंगतं लक्ष्यमार्गविचारतः ॥ २७ ॥

माडः

वेलावलाख्यसंमेलान्माडस्योत्पत्तिरीरिता ।
मारूमेवाडदेशेऽस्य जन्मभूः श्रूयते क्वचित् ॥ २८ ॥
प्राबल्यं समपानां स्यान्निषादस्यात्र कंपनम् ।
गानमनुमतं तज्ज्ञैः रंजकं सार्वकालिकम् ॥ २९ ॥
आरोहे रिधदौर्बल्यं वक्रत्वमवरोहणे ।
मध्यमस्यापि व्यस्तत्वं सर्वत्रातिमनोहरम् ॥ ३० ॥
केचिदत्रारोहणेऽपि वक्रत्वमादिशंति तत् ।
मन्ये नूनमुपपन्नं लक्ष्यमार्गविचारतः ॥ ३१ ॥

देवगिरिः

शुद्धस्वरसमायोगाज्जातो देवगिरिस्तथा ।
बिलावलप्रभेदोऽयं कल्याणांगेन मंडितः ॥ ३२ ॥
षड्जस्तत्र भवेद्वादी विलोमे दुर्बलौ धगौ ।
नातिदीर्घस्तीव्रमोऽपि क्वचिल्लक्ष्ये प्रदृश्यते ॥ ३३ ॥
बिलावलप्रभेदेषु नियमोऽतिमनोहरः ।
अवरोहक्रमे नित्यं तदंगं प्रकटीभवेत् ॥ ३४ ॥
अभ्यासात्तीव्रमस्यात्र यमनीरागसंभवः ।
स तु पृथग्मतो रागः सर्वैश्च गायकोत्तमैः ॥ ३५ ॥
अवरोहे धैवतेन सह कोमलनेर्लवः ।
वेलावलस्वरूपं तत्प्रदर्शयेदसंशयम् ॥ ३६ ॥
आरोहणे रात्रिगेया यथा रागाः परिस्फुटाः ।
तथैवावरोहणे ते दिनगेयाः प्रकीर्तिताः ॥ ३७ ॥
पूर्वांगस्य प्रधानत्वात्पूर्वरागविचित्रता ।
सा चैवोत्तररागाणां सामान्यतोऽवरोहणे ॥ ३८ ॥
केचिदत्र विकल्पेन ह्यादिशंति पवर्जनम् ।
न तल्लक्ष्याध्वनि प्राप्तमिति नांगीकृतं मया ॥ ३९ ॥

नटः

शंकराभरणान्मेलान्नटरागसमुद्भवः ।
मध्यमांशन्यासकश्च रसे वीरे प्रयुज्यते ॥ ४० ॥
आरोहणे सुसंपूर्णो विलोमे धगवर्जितः ।
गानमस्य समीचीनं रात्र्यां यामे द्वितीयके ॥ ४१ ॥
ग्रंथेषु केषुचित्तत्र कोमलो गोऽपि लक्षितः ।
प्रतीतं नेह लक्ष्ये यत्तन्मानं नार्हति ध्रुवम् ॥ ४२ ॥
छायाकामोदसंयुक्तो ह्यलय्यामिश्रितः क्वचित् ।
रागोऽयं दृश्यते गीतो लक्ष्यमार्गविचक्षणैः ॥ ४३ ॥
पूर्वांगस्य प्रधानत्वाद्बिलावलो न संभवेत् ।
मध्यमस्य च व्यस्तत्वाच्छायाकामोदवारणम् ॥ ४४ ॥

शुक्लबिलावली.

या शुद्धस्वरमेलात्सा शुक्ला वेलावली मता ।
वेलावल्याः प्रभेदोऽयं प्रातःकालोचितो मतः ॥ ४५ ॥
शुद्धमोऽत्र भवेद्वादी संवादी षड्ज ईरितः ।
आरोहे स्याद्रिदौर्बल्यं न्यासो मध्यम एव च ॥ ४६ ॥
उत्तरांगप्रधानत्वादवरोहे विचित्रता ।
व्यस्तत्वं शुद्धमस्यात्र विशिष्टां रक्तिमाचरेत् ॥ ४७ ॥
वेलावल्या अवरोहः सुप्रसिद्धः सतांमते ।
तस्यैवात्र सुप्रयोगः श्रोतृचित्तं प्रहर्षयेत् ॥ ४८ ॥
कोमलस्य निषादस्य स्पर्शो धैवतसंयुतः ।
अवरोहे सुप्रविष्टो नूनं स्याद्रक्तिदः सदा ॥ ४९ ॥

नटबिलावली.

शंकराभरणान्मेलाज्जातो रागः सुनामकः ।
बिलावलो नट्टपूर्वो मध्यमांशो गुणिप्रियः ॥ ५० ॥
पूर्वांगे नट्टयोगेन धत्ते गौडस्वरूपकम् ।
बिलावलस्यावरोहे भवेदंगं सुनिश्चितम् ॥ ५१ ॥
स्यान्मध्यमस्य व्यस्तत्वं प्रसिद्धं नट्टगायने ।
अत्रापि तद्योजनीयं यथायोग्यं विचक्षणैः ॥ ५२ ॥

रिधयोः संगतिश्चापि भवेद्वैचित्र्यकारिणी ।
समीचीनं गानमस्य प्रथमप्रहरे दिने ॥ ५३ ॥

मलुहाकेदारः

केदारो मलुहानामा शंकराभरणस्वरैः ।
श्यामकामोदसंयोगादुद्भूतो लोकविश्रुतः ॥ ५४ ॥
केदारस्य प्रभेदोऽयं मन्यते लक्ष्यवेदिभिः ।
गानमप्यस्य रागस्य रात्र्यां प्रथमयामके ॥ ५५ ॥
जलधारश्चांदनिश्च मलुहोऽयं तृतीयकः ।
आधुनिका मता एते प्रभेदा लक्ष्यवर्त्मनि ॥ ५६ ॥
केदारे प्रबला नित्यं षड्जमध्यमपंचमाः ।
मतमेतत् सुप्रसिद्धं रागेऽस्मिन्नपि युज्यते ॥ ५७ ॥
मंद्रस्थानस्वरैः कुर्यादस्य रागस्य रोपणम् ।
तत्रैवासौ प्रशोभेत लयः स्यात्सुविलंबितः ॥ ५८ ॥
मंद्रस्थो मध्यमो नूनं रागे वैचित्र्यमावहेत् ।
निषादात्षड्जसंस्पर्शः कस्य नो हृदयंगमः ॥ ५९ ॥

गुणकली.

शंकराभरणे मेले संजातो राग उत्तमः ।
गुणकेलीतिनामासौ कल्याणांगसुशोभितः ॥ ६० ॥
बिलावलस्यांगभूतः षड्जांशश्चातिरक्तिदः ।
उत्तरांगप्रधानत्वात्प्रातर्गेयो बुधैर्मतः ॥ ६१ ॥
यद्वा ह्युत्तररागाणां प्रकृतिर्नियता मता ।
अवरोहेण वर्णेन समाकर्षति ते मनः ॥ ६२ ॥
ग्रंथेषु दृश्यते यान्या गुंडक्री रागिणी पुनः ।
सा मता गुणिभिस्तत्र मेले मालवगौडके ॥ ६३ ॥

ककुभः

स्याच्छुद्धस्वरसंमेलाद्रागः ककुभनामकः ।
वेलावलप्रभेदोऽयं रिपसंवादशोभनः ॥ ६४ ॥
रिपयोः संगतिश्चित्रा सर्वेषां स्यान्मनोहरा ।
वेलावलावरोहेण भवेद्रागप्रसूचनम् ॥ ६५ ॥

कंपनमृषभेह्यत्र जयावंतीं प्रदर्शयेत् ।
अभावे तु कोमलस्य गांधारस्य न सा भवेत् ॥ ६६ ॥
अलय्याझिंझुटीयोगात् ककुभोत्पत्तिरीरिता ।
कैश्चिदपि लक्ष्यविद्भिर्बुधः कुर्यात्स्वनिर्णयम् ॥ ६७ ॥

दुर्गा.

द्राक्शुद्धस्वरसंमेलाद्दुर्गानाम्नी प्रजायते ।
औडवा गनिहीनासौ मध्यमांशेन मंडिता ॥ ६८ ॥
अत्रेषद्विलसेच्छाया शुद्धमल्लारिका पुनः ।
पंडितैर्गानमेतस्या द्वितीयप्रहरे मतम् ॥ ६९ ॥
गांधारस्य विलुप्तत्वात्प्रतीतः सोरटो भवेत् ।
आरोहे धैवतः स्पष्टस्तद्रूपमपसारयेत् ॥ ७० ॥
रिपयोः संगतिश्चात्र मल्लार्यंगं निवारयेत् ।
व्यस्तमध्यमयोगोऽपि श्रोतृचित्तहरो भवेत् ॥ ७१ ॥
निषादस्य प्रलुप्तत्वे कुतः सारंगसंभवः ।
अवरोहे गसंयोगे सोमरागस्य नोद्भवः ॥ ७२ ॥
ग्रंथेषु कथितं रूपं शुद्धसावेरिनामकम् ।
इदमेव कदाचित्स्याद्बुधः कुर्याद्यथोचितम् ॥ ७३ ॥

हंसध्वनिः

हंसध्वन्याह्वयो रागः स्यात् शुद्धस्वरमेलनात् ।
आरोहेऽप्यवरोहे च मधहीनो भवेत्सदा ॥ ७४ ॥
स्वरः षड्जो मतो वादी कैश्चिद्गांधारको ह्यसौ ।
गानमस्य समादिष्टं रात्र्यां प्रथमयामके ॥ ७५ ॥
हिंदुस्थानीयपद्धत्यां प्राचुर्यं नास्य दृश्यते ।
संगीते दाक्षिणात्यानां स तु साधारणो मतः ॥ ७६ ॥

हेमकल्याणः

शंकराभरणे मेले हेमकल्याणनामकः ।
सायं गेयः सांशकोऽपि लक्ष्यविद्भिः प्रकीर्तितः ॥ ७७ ॥
षड्जस्वरो भवेद्वादी संवादी पंचमो मतः ।
मंद्रमध्यस्वरैरेव सर्वेषां रक्तिदो भवेत् ॥ ७८ ॥

कल्याणे मिश्रणात्तत्र कामोदस्य समुद्भवेत् ।
रागोऽयमिति केषांचित्संमतं लक्ष्यवेदिनाम् ॥ ७९ ॥
आरोहणे धहीनः स्यान्मन्द्रपोद्ग्राहको भवेत् ।
विलंबितलये गीतो विशिष्टं सुखमावहेत् ॥ ८० ॥
क्षेमकल्याणनामापि रागोऽन्यो वर्णितः क्वचित् ।
लक्ष्ये प्रसिद्धिवैधुर्यादस्माभिर्नात्र लक्षितः ॥ ८१ ॥

सर्पर्दा.

शुद्धस्वरसंमेलने सर्पर्दा रागिणी मता ।
बिलावलप्रकारोऽयं प्रातःकालोचितः पुनः ॥ ८२ ॥
सपयोरत्र संवादः स्वीकृतो बहुसंमतः ।
अवरोहे सनिश्चयं बिलावलप्रदर्शनम् ॥ ८३ ॥
गांधारस्य केचिदिह वादित्वमादिशंति तत् ।
मते तेषां धैवतोऽपि महत्वमाप्नुयाद्भृशम् ॥ ८४ ॥
यद्यप्यत्र बिहागस्य किंचिद्रूपंसमुद्भवेत् ।
आयतो रिषभो नूनं श्रोतृभ्रांतिं निवारयेत् ॥ ८५ ॥
यमनालायिकागौडा रागिण्यामत्र मिश्रिताः ।
इति केचित्संगिरंति लक्ष्यसंगीतकोविदाः ॥ ८६ ॥
रागे कर्णाटगौडे तु बिलावलीसुमिश्रणात् ।
सर्पर्दा संभवेदिति सोमनाथेन लक्षितम् ॥ ८७ ॥

लच्छाशाखः

शंकराभरणे मेले लच्छाशाखो बुधैर्मतः ।
बिलावलांगभूतत्वात्प्रातःकालः परिस्फुटः ॥ ८८ ॥
धगयोश्चैव संवादः संमतो लक्ष्यवेदिनाम् ।
यतोऽत्र दृश्यते स्पष्टा झिंझूटीसंगतिर्ध्रुवम् ॥ ८९ ॥
गांधारस्य प्रयोगे चेद्गौडसारंगशंकनम् ।
बिलावलस्य प्राधान्यात्स्याच्छंकापरिमार्जनम् ॥ ९० ॥
नूनं बिलाबलस्यैते प्रकारा वादमूलकाः ।
केवलं लक्ष्यमाश्रित्य बुधाः कुर्वंति निर्णयम् ॥ ९१ ॥
रागोऽयं स्यात्सुसंपूर्णो निषादद्वयमंडितः ।
अवरोहे निश्चयेन बिलावलं प्रदर्शयेत् ॥ ९२ ॥

## खंमाजीमेले ।

### झिंझूटिः

कांभोजीमेलको ग्रंथे खंमाजीनामकोऽधुना ।
तदुद्भवाश्च ये रागा निकोमलाः सुसंमताः ॥ १ ॥
झिंझूटिं प्रथमं वक्ष्ये मेलरागसमाश्रयाम् ।
गांधारांशादिकां पूर्णां सायंगेयां सुशोभनाम् ॥ २ ॥
सुगमं सरलं रूपं कांभोजीमेलके त्विदम् ।
क्षुद्रगीतक्षममाहुः सर्वेषामपि रंजकम् ॥ ३ ॥
आश्रयीभूतरागत्वान्नियमः कथ्यते बुधैः ।
भ्रष्टश्चेदन्यरागेभ्य एतस्यां गायको विशेत् ॥ ४ ॥
आरोहे रिस्वरस्पर्शः खंमाजमपसारयेत् ।
सरलारोहणत्वाच्च गौडसारंगकोऽपि नो ॥ ५ ॥

### खंमाजः

कांभोजीमेलसंजातो रागः खंमाजनामकः ।
आरोहे तु रिवर्ज्ये स्यादवरोहे समग्रकम् ॥ ६ ॥
यदा हि धैवतो दीर्घस्तदा मध्यमसंगतिः ।
आरोहे पंचमाल्पत्वं निषादो रक्तिव्यंजकः ॥ ७ ॥
प्रयोगस्तीव्रनेरेवमारोहे सर्वसंमतः ।
दृश्यते नियमोऽप्येष लक्ष्यज्ञानां विपश्चिताम् ॥ ८ ॥
गांधारः संमतो वादी निषादोऽमात्यसंज्ञितः ।
गानमेतस्य रागस्य रात्र्यां यामे द्वितीयके ॥ ९ ॥
संगतिर्धमयोरत्र विशेषेण सुखप्रदा ।
अवसानं गेस्वरेतद्वदेद्रागं परिस्फुटम् ॥ १० ॥

### तिलंगिका.

जाता कांभोजिमेले या रागिणी सा तिलंगिका ।
आरोहे चावरोहेऽपि रिधहीनैव संमता ॥ ११ ॥
गांधारोऽत्र भवेद्वादी निषादोऽमात्यसंनिभः ।
खंमाजीं प्रकृतिं धत्ते नीपयोः संगतिः सदा ॥ १२ ॥

धैवतस्य विलुप्तत्वे सिद्धा खंमाजभिन्नता ।
रिधहीना यतो गीता झिंझूटिनैव सर्वथा ॥ १३ ॥
पंचमेन प्रस्फुटेन दुर्गाया नैव संभवः ।
गानमस्याः समीचीनं भूयाद्यामे द्वितीयके ॥ १४ ॥

### खंबावती.

खंमाजीमेलके प्रोक्ता खंबाव्वत्याह्वया शुभा ।
खंमाजनियमानां सा भवेन्नूनं विपर्ययात् ॥ १५ ॥
आरोहे रिषभः स्पृष्टस्त्यक्तोऽसौ चावरोहणे ।
मध्यमात्षड्जसंस्पर्शः सर्वथैव मनोहरः ॥ १६ ॥
मधयोः संगतिः प्रोक्ता ह्यवरोहे पवक्रता ।
उत्तरार्धस्वरैः किंचिद्वागीश्वर्यंगमावहेत् ॥ १७ ॥
प्राचुर्येरिधयोरत्र खंमाजांगं कथं भवेत् ।
गानमस्याः समादिष्टं रात्र्यां यामे द्वितीयके ॥ १८ ॥
ग्रंथेषु केषुचिदस्यां धकोमलत्वमीरितम् ।
पहीनत्वमपि प्रोक्तं न तल्लक्ष्ये सुसंमतम् ॥ १९ ॥

### दुर्गा.

कांभोजी मेलकेऽप्यन्या दुर्गा स्याल्लक्ष्यवर्त्मनि ।
औडवा रिपहीनाऽसौ गांधारांशेन भूषिता ॥ २० ॥
मधयोरत्र संगत्या वागीश्वर्यंगसंभवः ।
गांधारः कोमलस्तत्र सचात्रैवास्ति तीव्रकः ॥ २१ ॥
ऋषभस्य प्रलुप्तत्वे झिंझूटिनैव संभवेत् ।
धसंयोगात्पलुप्तत्वाद्विभिन्नापि तिलंगिका ॥ २२ ॥
संपूर्णेनावरोहेण खंमाजो भिन्नतां भजेत् ।
गानमस्या मतं नित्यं रात्र्यां यामे द्वितीयके ॥ २३ ॥
ईषत्स्पर्शोरिस्वरे चेद्ग्रंथोक्ता रागिणी भवेत् ।
नाटकुरंजिकानाम्नी गांधारांशमनोहरा ॥ २४ ॥
गनीहीना द्वितीयापि दुर्गा लक्ष्याध्वनि श्रुता ।
शंकराभरणे मेले वर्णिता पूर्वमेव सा ॥ २५ ॥

### रागेश्वरी.

कांभोजीमेलके तत्र रागेश्वरी बुधैर्मता ।
आरोहेचावरोहेऽपि पहीना षाडवा पुनः ॥ २६ ॥
षड्जांशा मध्यमांशा वा गीयते लक्ष्यवर्त्मनि ।
संगतिर्मधयोर्नूनं विशेषेणाऽत्र रक्तिदा ॥ २७ ॥
आरोहणे रिवर्ज्यं स्याद्धवक्रं चावरोहणे ।
गांधारस्य हि तीव्रत्वाद्रागेश्वर्याः प्रभिन्नता ॥ २८ ॥
रिस्वरस्यात्र योगेन दुर्गाया नैव संभवः ।
ग्रंथेषु केषुचित्त्वेषा संज्ञिता रविचंद्रिका ॥ २९ ॥
खंबावत्यां रिवर्जत्वमवरोहे समीरितम् ।
खंमाजतिलंगिकयोः पंचमस्य न लंघनम् ॥ ३० ॥
मते केषांचिदप्येषा खंमाजप्रकृतिर्यतः ।
प्रशस्तं गायनं तस्या नित्यं यामे द्वितीयके ॥ ३१ ॥

### सोरटी.

कांभोजीमेलकोत्पन्ना सोरटीनामिका पुनः ।
आरोहे रिधवर्ज्यं स्यादवरोहे समग्रकम् ॥ ३२ ॥
ऋषभोऽत्र मतो वादी सर्ववैचित्र्यकारणम् ।
संवादी धैवतो मान्यो रक्तिनिर्वाहकस्ततः ॥ ३३ ॥
केचिद्वदंति सोरठ्यां गस्पर्शाद्देशिका भवेत् ।
लक्षणं तत्समीचीनं देशीभिन्नत्वसूचकम् ॥ ३४ ॥
अवरोहे गस्वरस्य प्रयोगोघर्षणान्वितः ।
कार्योयस्माद्भवेद्व्यक्ता सारंगस्य प्रभिन्नता ॥ ३५ ॥
मध्यमादृषभे पातः सोरठ्यां जीवभूतकः ।
तत्रैवहि निर्णयंति श्रोतारो रागिणीमिमाम् ॥ ३६ ॥
केचित्पंचमके न्यासं कृत्वा देशीं परिस्फुटाम् ।
दर्शयंति न तन्मन्ये दोषार्हमिह सर्वथा ॥ ३७ ॥

### तिलककामोदः

खंमाजीमेलके प्रोक्तः कामोदस्तिलकान्वितः ।
संपूर्णः सांशको गीतो रात्र्यां यामे द्वितीयके ॥ ३८ ॥

आरोहे धैवतस्त्यक्तो रिवक्रमवरोहणे ।
सोरटीदेशिकांगेन गायना उद्धरंत्यमुम् ॥ ३९ ॥
गांधारात्षड्जसंस्पर्शो नूनं स्याद्तिरक्तिदः ।
अपन्यासो निषादेऽसौ सर्वदाभ्रांतिहारकः ॥ ४० ॥
आरोहणे रिप्रयोगात्खंमाजः संभवेत्कथम् ।
गांधारस्यप्रस्फुटत्वात्सोरठ्यंगं भवेत्कुतः ॥ ४१ ॥
झिंझूट्यादिमिश्रणेऽत्र रागो बिहारिसंज्ञकः ।
समुद्भवेदिति केचित् कथयंति विचक्षणाः ॥ ४२ ॥

जयावंती.

कांभोजीमेलके जाता जयावंती सुखप्रदा ।
ऋषभांशा सुसंपूर्णा सोरठ्यंगेन मंडिता ॥ ४३ ॥
तीव्रगस्य प्रयोगोऽत्र सोरटीमपसारयेत् ।
अवरोहे रिसंलग्नं कोमलं गं बुधः स्पृशेत् ॥ ४४ ॥
मंद्रस्थस्य पंचमस्य रिस्वरेण सुसंगतिः ।
छायानट्टस्वरूपस्य क्वचित्संदेहकारिणी ॥ ४५ ॥
छायानट्टे मतः पातः पंचमादृषभे शुभः ।
मध्यस्थानगतस्तज्ज्ञैरवश्यं रागव्यंजकः ॥ ४६ ॥
कोमलस्य तत्र गस्य प्रयोगो नोपलभ्यते ।
न चापि सोरटीरूपमितितस्य स्फुटा भिदा ॥ ४७ ॥
साधारणो नियमोऽपि जयावंत्यां मतो बुधैः ।
गनी तीव्रावनुलोमे कोमलौ तु विपर्यये ॥ ४८ ॥
वेलावली तथा गौडः सोरटीनामिका पुनः ।
त्रयोऽप्यत्र संमिलंति यथायोग्यं वदंति ते ॥ ४९ ॥
कांभोजीमेलजातेषु रागेषु रिषभांशकः ।
मतोऽयं मार्मिकैर्नूनं परमेलप्रवेशकः ॥ ५० ॥

गौंडमल्लारः

खंमाजीमेलके ख्यातो गौंडमल्लारनामकः ।
शंकराभरणेऽप्येनं केचिदाहुर्विपश्चितः ॥ ५१ ॥

संपूर्णोऽयं मध्यमांशो गीयते लक्ष्यवर्त्मनि ।
आरोहणे निदुर्बलो वर्षासु सुखदायकः ॥ ५२ ॥
गन्योरत्र परित्यागाच्छुद्धमल्लारसंभवः ।
मध्यमादृषभे पातो विशिष्टां रक्तिमावहेत् ॥ ५३ ॥
न्यल्पो मध्यान्हप्रगेयो धांशको लक्षितः पुनः ।
सोमनाथेन स्वग्रंथे गौडराग इति स्फुटम् ॥ ५४ ॥
नटमल्लाररागोऽपि धांशको गनिवर्जितः ।
वर्णितस्तेन कार्योत्र लक्ष्यविद्भिः सुनिर्णयः ॥ ५५ ॥
ईषच्छायानटस्पर्शान्मल्लारे मन्यते क्वचित् ।
नटमल्लारसंप्राप्तिर्मृदुगस्य लवादपि ॥ ५६ ॥
द्विगांधारप्रयोगेण रामदास्याख्यसंभवः ।
इति केचिद्वदंत्यन्ये बुधः कुर्याद्यथोचितम् ॥ ५७ ॥
मेघसोरटदेशाख्या जयावंती तथैव च ।
स्याद्धुंडिया सूरदासी नायकीनटशुद्धकाः ॥ ५८ ॥
तानसेनी तथा गौंडो ह्यरुणी झांझनामिका ।
इति मल्लारिकाभेदा व्यवहारे बुधैर्मताः ॥ ५९ ॥

## गारा.

हरिकांभोजिमेलेऽपि गारानाम्नी सुरागिणी ।
प्रकीर्तिता लक्ष्यविद्भिः संपूर्णा सांशका सदा ॥ ६० ॥
मंद्रमध्यस्वरैर्गीता सदैव स्यात्सुखप्रदा ।
गानमस्याः समीचीनं सुमतं सार्वकालिकं ॥ ६१ ॥
गांधारौ द्वौ तथैवात्र निषादौ द्वौ समीरितौ ।
अवरोहे कोमलौ तौ रोहणे तीव्रकौ निगौ ॥ ६२ ॥
कल्याणीझिंझुटीयोगः कौशल्येन सुसाधितः ।
आरोहे प्रथमा व्यक्ता द्वितीया चावरोहणे ॥ ६३ ॥
क्षुद्रगीतार्हताप्यस्य सर्वेषामस्ति संमता ।
अतः साधारणं रूपमिदं तज्ज्ञैः सुनिश्चितम् ॥ ६४ ॥
मंद्रमे षड्जमारोप्य प्रायशो गायका अमुम् ।
आमध्यमध्यमं नूनं गायंति भूरिरक्तिदम् ॥ ६५ ॥

### बडहंसः

कांभोजीमेलकेऽप्यत्र बडहंसो मतो बुधैः ।
कैश्चिदन्यैर्वर्णितोऽसौ शंकराभरणे पुनः ॥ ६६ ॥
वादित्वं पंचमे प्रोक्तममात्यत्वं तु षड्जके ।
गानमस्य समीचीनं द्वितीयप्रहरे दिने ॥ ६७ ॥
सारंगस्य विशेषोऽयं संमतः सर्वतोऽधुना ।
गांधारस्यैव लोपोऽत्र स्वीकृतस्तेन हेतुना ॥ ६८ ॥
ग्रंथेषु धगलोप्यत्वे मतैक्यं नोपलभ्यते ।
लंघनं तु तयोर्लक्ष्ये सुमतं तद्विदां ध्रुवम् ॥ ६९ ॥
स्याद्यस्तत्त्वं मध्यमे तन्नूनं रक्तिप्रदायकम् ।
गलुप्तत्वाद्भवेत्सद्यः सूहायाः प्रस्फुटाभिदा ॥ ७० ॥
सारंगस्य विभेदास्ते मेलेऽस्मिन् कैश्चिदीरिताः ।
अस्माभिस्तु मता एते हरप्रियाख्यमेलने ॥ ७१ ॥

### नारायणी.

कांभोजीमेलसंजाता नारायणी प्रकीर्तिता ।
आरोहे गनिहीना सावरोहे गवर्जिता ॥ ७२ ॥
कैश्चित्सैव मनीत्यक्ता शंकराभरणे मता ।
मतभेदास्तत्र संतु ग्रंथेऽत्र प्रथमा मता ॥ ७३ ॥
ऋषभं वादिनं मत्वा भवेत्सारंगसंनिभा ।
निवर्जत्वे धसंयोगे भवेत्तद्रूपवारणम् ॥ ७४ ॥

### प्रतापवराळी.

कांभोजीमेलकात्तत्र संजातो राग उत्तमः ।
प्रतापाद्यवराळ्याख्यो रिषभांशग्रहो मतः ॥ ७५ ॥
आरोहणेनिगौनस्तोऽवरोहेस्यान्निवर्जनम् ।
गानमस्य समादिष्टं द्वितीयप्रहरे निशि ॥ ७६ ॥
केचिदत्र तीव्रमस्य प्रयोगमादिशंत्युत ।
न तद्युक्तमहं मन्ये निषादः कोमलो यतः ॥ ७७ ॥
मतीव्रेषु तु रागेषु कोमलो निर्न युज्यते ।
नियमोयं मतस्तज्ज्ञैर्व्यवहारे सुसंगतः ॥ ७८ ॥

### नागस्वरावली.

कांभोजीमेलके चापि जाता नागस्वरावली ।
आरोहेप्यवरोहे च निरिवर्ज तथौडवम् ॥ ७९ ॥
षड्जांशा मध्यमांशा वा गीताऽसौ लक्ष्यपंडितैः ।
गानं तस्याः समादिष्टं रात्र्यां यामे द्वितीयके ॥ ८० ॥
दाक्षिणात्यामतारागास्त्रयोंऽतिमा असंशयम् ।
दृष्टा लक्ष्ये यतोऽस्माभिरत्र ग्रंथे सुलक्षिताः ॥ ८१ ॥

### टिप्पनी

कांभोजीमेलजा रागा विभक्तास्ते द्विधा बुधैः ।
गांशकान्यंशकाश्चेति रहस्यं गुणिसंमतम् ॥ ८२ ॥
खंमाज्यंगा मता गांशाः सोरठ्यंगास्तु न्यंशकाः ।
तत्वं त्विदं स्मरेन्नित्यं लक्ष्यमार्गविशारदः ॥ ८३ ॥
खंमाजी रागश्रीर्दुर्गा खंबावती तिलंगिका ।
गांधारांशे मता वर्गे मर्मज्ञैर्गीतवेदिभिः ॥ ८४ ॥
सोरटी देशिका चैव कामोदस्तिलकान्वितः ।
जयावंत्यादिका वर्गे द्वितीये लक्षिताः पुनः ॥ ८५ ॥
जयावंतीहसा नूनं द्विगांधारसुयोगतः ।
सूचयेत्परमेलं तं कर्णाटाख्यमसंशयम् ॥ ८६ ॥
मिश्ररागांस्त्वनंतांस्तान् कोवा वर्णयितुं क्षमः ।
केवलं ते समुन्नीता लक्ष्यमालंब्य कोविदैः ॥ ८७ ॥
ग्रंथे रत्नाकराभिख्ये भावभट्टकृते ध्रुवम् ।
दृश्यंते बहवो भेदा नाममात्रेण कीर्तिताः ॥ ८८ ॥
लक्षणानि पुनस्तेषां तत्र नोक्तानि सर्वशः ।
प्रसंगान्मदभिप्रायं प्रवक्ष्यामि यथोचितम् ॥ ८९ ॥
वेलावल्यथ कल्याणो नटसारंगगौडकाः ।
मल्लारः कानडाप्येते ह्युपांगजनकाः स्वयम् ॥ ९० ॥

## भैरवमेले

### भैरवः

लक्ष्ये भैरवमेलो यः स ग्रंथे गौडमालवः ।
तदुत्पन्नः सुविख्यातो भैरवो गीयते बुधैः ॥ १ ॥
धैवतांशग्रहः प्रोक्तः संपूर्णः सर्वसंमतः ।
आरोहणेभवेद्यल्पः प्रातःकालोचितः पुनः ॥ २ ॥
अस्मान्मेलात्समुत्पन्नाः प्रसिद्धा बहवोऽपि ते ।
प्रातर्गेयप्रकारा ये ह्युत्तरांगप्रधानकाः ॥ ३ ॥
रिधयोरत्र वैचित्र्यं यथा गन्योः प्रदोषके ।
आंदोलनं तयोरेव कुरुते चित्तरंजनम् ॥ ४ ॥
ग्रंथेषु केषुचित्प्रोक्तो निषादः कोमलोऽपि यत् ।
अवरोहप्रसंगेऽसौ रक्तिघ्नो नैव मे मते ॥ ५ ॥
यत्र मस्य प्रधानत्वं गस्य तत्राल्पता भवेत् ।
इति साधारणो लक्ष्ये नियमो बहुसंमतः ॥ ६ ॥
भैरवोऽयं यथा प्रातः सायं श्रीराग ईरितः ।
एकस्मिन्धैवतो राजा द्वितीये रिस्वरस्तथा ॥ ७ ॥
संधिप्रकाशरागाणां प्रायेणेदंहि व्यंजनम् ।
कोमलत्वं भवेद्धर्योर्गन्योस्तीव्रत्वमीक्षितम् ॥ ८ ॥
भैरवस्य रिधौ यस्माद्विशेषेणातिरक्तिदौ ।
उत्तमा गायका नूनं प्रथमं साध्नुवंति तौ ॥ ९ ॥

### मेघरंजनी.

भैरवस्यैव संमेलाद्रागिणी मेघरंजनी ।
औडवा पधहीनाऽसौ मध्यमेन सुभूषिता ॥ १० ॥
व्यस्तमध्यमयोगोऽत्र ललितांगं प्रदर्शयेत् ।
धैवतस्य प्रलुप्तत्वे तदपि नैव संभवेत् ॥ ११ ॥
तीव्रमस्य लवं केचिदादिशंति विचक्षणाः ।
विलोमे रात्रिगेये तद्दोषार्हं नैव मे मते ॥ १२ ॥
अथवा संमतो लक्ष्ये नियमो हि मनीषिणाम् ।
द्रुतगीतो विवाद्यपि क्षम्यः स्यादवरोहणे ॥ १३ ॥

धैवतस्य परित्यागाद्भैरवांगमसंभवम् ।
विलंबितं भवेद्गानं शेषयामेऽतिरक्तिदम् ॥ १४ ॥

गुणक्री.

भैरवान्मेलकाज्जाता गुणक्री रागिणी पुनः ।
आरोहे चावरोहेऽपि गनीहीना सुसंमता ॥ १५ ॥
धैवतस्तु भवेद्वादी यतोऽसौ भैरवांगिका ।
मंद्रमध्यस्वरैर्गीता नित्यं श्रोतृसुखावहा ॥ १६ ॥
रिमयोः संगतेस्तत्र जोगियाशंकनं भवेत् ।
निषादस्याप्यपाहाराद्बुधस्तदपसारयेत् ॥ १७ ॥
संध्याकालप्रगेयेषु रागेषु नैव युज्यते ।
निगयोर्लंघनं प्रातर्गेयेषु रिधयोस्तथा ॥ १८ ॥
गुंडक्रीनामिकाप्यन्या धरिक्ता सांशका पुनः ।
या दिनांते मता कैश्चित्तस्याभित्स्यात्परिस्फुटा ॥ १९ ॥

जोगिया.

गौडमालवमेलोत्था जोगिया कथ्यते बुधैः ।
उत्तरांग प्रधानत्वात्प्रातःकालोऽपि प्रस्फुटः ॥ २० ॥
समयोरत्र संवादो भैरवेरिधयोरसौ ।
निषादाकलनात्प्राज्ञैर्गुणक्रीभेद उच्यते ॥ २१ ॥
गांधारः सर्वथा त्याज्यो निस्त्यक्तश्चाधिरोहणे ।
रिमयोर्धमयोर्वा स्यात्संगतिः सर्वरक्तिदा ॥ २२ ॥
अवरोहक्रमे पोऽल्पो निषादे घर्षणं स्मृतम् ।
मध्यमस्य सुव्यस्तत्वं कस्य न स्यान्मनोहरम् ॥ २३ ॥
आसावर्या मिश्रणेन भैरवे रूपकं त्विदम् ।
कदाचित्स्यात्समुत्पन्नमितिकेचिद्विदोविदुः ॥ २४ ॥

प्रभातः

भैरवे मेलके प्रोक्तः प्रभातो लक्ष्यवेदिभिः ।
मध्यमांशः प्रभाताहों ललितांगविभूषितः ॥ २५ ॥
भैरवस्थरिधावत्र प्रातःकालप्रसूचकौ ।
वादित्वान्मध्यमस्यैव तद्भिन्नत्वं परिस्फुटम् ॥ २६ ॥

प्रयोगः पंचमस्यास्मिन् ललितांगनिवारकः ।
भक्तिमार्गसुप्रयुक्तो नूनं स्याद्भुक्तिमुक्तिदः ॥ २७ ॥
अनुलोमे मनीयोगा द्रामकल्यानसंभवः ।
गुणक्र्यां तु गनीत्यक्तावतस्तस्याः स्फुटा भिदा ॥ २८ ॥
विचित्रता सदैवात्र बिलंबितलये मता ।
द्रुतलये कदाचित्स्यात् कलिंगेन विमिश्रणम् ॥ २९ ॥

कलिंगडा.

गौडमालवके मेले बुधैः ख्याता कलिंगडा ।
गांधारो मध्यमो वापि तत्र स्याद्बहुलः स्वरः ॥ ३० ॥
ह्रस्वत्वाद्रिधयोश्चैव भैरवस्य न संभवः ।
गानं सुसंमतं तस्या रात्र्यां यामे तृतीयके ॥ ३१ ॥
प्रकृतिर्लक्षितैतस्याश्चंचला पंडितास्ततः ।
क्षुद्रगीतोपपन्नत्वमपि तस्या वदंति ते ॥ ३२ ॥
संपूर्ण सरलं रूपमेतत्सर्वगुणिप्रियम् ।
असंशयं सुप्रगीतं भवेद्वैचित्र्यकारणम् ॥ ३३ ॥

सौराष्ट्रः

भैरवे मेलके तत्र सौराष्ट्रो वर्ण्यते बुधैः ।
मध्यमांशश्च संपूर्णः प्रातर्गेयो निदुर्बलः ॥ ३४ ॥
धैवतावत्र द्वौ युक्ताविति लक्ष्यविदां मतम् ।
तीव्राख्यस्त्वनुलोमे स्याद्विलोमे कोमलः पुनः ॥ ३५ ॥
उत्तरांगे क्वचिच्छाया भट्टिहारस्य लक्षिता ।
संगत्या मधयोस्तत्र पूर्वांगे भैरवस्य सा ॥ ३६ ॥
कलिंगडोऽथ बंगालस्तृतीयः पंचमाह्वयः ।
एतत्संमिश्रणोद्भूतं स्वरूपं मन्यते क्वचित् ॥ ३७ ॥
केचिदन्येह्युत्तरांगे बिलावलस्य संगतिम् ।
समर्थयंति लक्ष्यज्ञा बुधः कुर्यात् स्वनिर्णयम् ॥ ३८ ॥

रामकली.

मेले मालवगौडीये रागो जातः सुमंगलः ।
रामकेलीति विख्यातः प्रातर्गेयो बुधप्रियः ॥ ३९ ॥

धैवतस्यैव वादित्वं संवादित्वं तु रेः स्मृतम् ।
आरोहे मनिवर्जं स्यादवरोहे समग्रकम् ॥ ४० ॥
केचिदत्र निर्दिशंति मध्यमौ द्वौ विपश्चितः ।
शुद्धमध्यमव्यस्तत्वं गर्हणीयं न तन्मते ॥ ४१ ॥
निषादयोर्द्वयोरेव प्रयोगो दृश्यते क्वचित् ।
भैरवांगप्रभूतत्वं तथापि बहुसंमतम् ॥ ४२ ॥
यथा रामकली प्रातःसायं रामक्रिया मता ।
शुद्धमध्यमयुक्ताद्या द्वितीया तीव्रमान्विता ॥ ४३ ॥

विभासः

मेले भैरवके तत्र मनिहीनो विभांशुकः ।
औडवो धैवतांशोपि पंचमन्यासमंडितः ॥ ४४ ॥
विचित्रो गपसंगत्या सुशांतप्रकृतिः पुनः ।
उत्तरांगप्रधानोऽयं प्रभाते हर्षयेन्मनः ॥ ४५ ॥
यत्र यत्र मनित्यागः संगतिर्गपयोर्भवेत् ।
नियमोऽयं सुप्रसिद्धः पूर्वमेव मयोदितः ॥ ४६ ॥
पंचमस्वरके न्यासो धैवतात्क्रियते यदा ।
न कोऽपि शक्नुयात् ख्यातुं श्रोतृचित्तगतं सुखम् ॥ ४७ ॥
तीव्रमेण तथा तीव्रधेनापि श्रूयते क्वचित् ।
उत्तरांगप्रधानत्वं तत्रापि दृश्यते स्फुटम् ॥ ४८ ॥
अवरोहे मनित्यागे रामकेली कुतो भवेत् ।
न कोप्यन्यो मनीहीनो रागः प्रातः सुलक्ष्यते ॥ ४९ ॥
संध्याकाले यथा रेवा तथा प्रातर्विभांशुकः ।
गांशकाद्या मता तज्ज्ञैर्द्वितीयो धांशको मतः ॥ ५० ॥
भैरवस्तु सुसंपूर्णो गुणक्री स्यान्निगोज्झिता ।
रामकेली मनीहीना त्वनुलोमे सुसंमता ॥ ५१ ॥

गौरी.

मेले मालवगौडस्य गौरी शास्त्रेषु लक्षिता ।
ऋषभांशग्रहा नित्यं सायंगेयैव संमता ॥ ५२ ॥
आरोहणे धगोना स्यात् संपूर्णा च विलोमके ।
मंद्रमध्यस्वरैस्तस्या गानं स्यादतिरक्तिदम् ॥ ५३ ॥

केचिदत्र निर्दिशंति तीव्रमस्यापि योजनम् ।
सायंगेये स्वरूपेऽस्मिन् भाति मे न विसंगतम् ॥ ५४ ॥
मंद्रस्थस्य निषादस्य वैचित्र्यमद्भुतं मतम् ।
श्रोतारः प्रायशस्तत्र कुर्वंति रागनिर्णयम् ॥ ५५ ॥
कलिंगांगा मता गौरी पूरियांगा तथैव च ।
मतं त्विदं सुप्रसिद्धं नियतं लक्ष्यवेदिनाम् ॥ ५६ ॥
मतभेदा यद्यप्येते व्यवहारे समीक्षिताः ।
श्रीरागांगस्य प्राबल्यं सर्वत्र दृश्यते स्फुटम् ॥ ५७ ॥
केचिदाहुर्गस्वरस्य सर्वथैव विवर्जनम् ।
यतः स्यात् प्रस्फुटा गौर्याः श्रीरागादपि भिन्नता ॥ ५८ ॥

### ललितपंचमः

गौडमालवमेलोत्थो रागो ललितपंचमः ।
आरोहे तु पवर्ज्ये स्यात् पूर्णवक्रावरोहकम् ॥ ५९ ॥
मध्यमस्यैव बाहुल्यान्निश्चितं चित्तरंजनम् ।
गानं चानुमतं रात्र्यां तृतीये यामके सदा ॥ ६० ॥
ललितांगालंकृतोऽयं स्वीकृतो गायनोत्तमैः ।
मध्यमावप्युभौ ग्राह्याविति लक्ष्यविदां मतम् ॥ ६१ ॥
अवरोहे यथायोग्यं पंचमस्य प्रयोगतः ।
गोपनं ललितांगस्य कुर्वंते गानकोविदाः ॥ ६२ ॥

### सावेरी.

गौडमालवमेलाच्च ख्याता सावेरिनामिका ।
आरोहे गनिवर्ज्यं स्यादवरोहे समग्रकम् ॥ ६३ ॥
पंचमोऽत्र मतो वादी संवादी षड्ज ईरितः ।
गानमस्याः समादिष्टं प्रभाते गायनोत्तमैः ॥ ६४ ॥
प्रचारोऽस्याश्च रागिण्याः कर्णाटकेऽधिकोमतः ।
कर्हिचित्साश्रुताऽत्रापि संगृहीतेह ग्रंथके ॥ ६५ ॥
पूर्णत्वादवरोहस्य रागिण्यावपवारयेत् ।
गुणक्रीजोगिये चैव स्फुटमेतत्तु तद्विदाम् ॥ ६६ ॥

### बंगालः

भैरवे मेलके तत्र बंगालोत्पत्तिरीरिता ।
भैरवस्यैव भेदोऽसाविति तज्ज्ञैः सुनिश्चितम् ॥ ६७ ॥
आरोहे चावरोहेऽत्र निषादो वर्जितः स्वरः ।
अवरोहे पुनर्दृष्टा गांधारस्वरवक्रता ॥ ६८ ॥
भैरवस्य प्रभेदत्वात्तदंगं स्यात्सुसंमतम् ।
निवर्जत्वाद्गवक्रत्वाद्भैरवस्य प्रभिन्नता ॥ ६९ ॥
गांधारस्य परित्यागे स्वर्णाकर्षणनामकः ।
भैरवस्यैव भेदः स्यात्षाडवो मध्यमांशकः ॥ ७० ॥
सधयोः संगतिर्नूनं बंगाले रक्तिदायिनी ।
गानमस्यापि रागस्य प्रथमप्रहरोचितम् ॥ ७१ ॥

### शिवमतभैरवः

भैरवस्यैव मेलेऽसौ भैरवः शिवपूर्वकः ।
नियुक्तो नित्यमाचार्यैर्मिश्रमेलसमुद्भवः ॥ ७२ ॥
आरोहे गनितीव्रत्वं भैरवांगं प्रदर्शयेत् ।
अवरोहे तन्मृदुत्वं भवेत्तोड्यादिकारणम् ॥ ७३ ॥
प्रसिद्धिविधुरत्वात्तु रागोऽयं वादमूलकः ।
लक्ष्यमार्गमनुसृत्य कुर्यादिह स्वनिर्णयम् ॥ ७४ ॥
भैरवस्य रिधौ योज्यौ सदैव गायकोत्तमैः ।
तदंगं तत्वतस्तेन सुव्यक्तं प्रकटीभवेत् ॥ ७५ ॥

### आनंदभैरवः

मेलान्मालवगौळीयाज्जातो रागो गुणिप्रियः ।
आनंदभैरवाख्यातः संपूर्णः सांशकः पुनः ॥ ७६ ॥
पूर्वांगे भैरवो मेलः शंकराभरणाह्वयः ।
उत्तरांगे प्रसक्तः स्यादिति लक्ष्यविदां मतम् ॥ ७७ ॥
मिश्रणाद्भैरवे तत्र बिलावल्याः समुद्भवेत् ।
गायनं तस्य संप्रोक्तं प्रातःकाले मनीषिभिः ॥ ७८ ॥
प्रयोगात्तीव्रधस्येह सूर्यकांताभिधः पुनः ।
ग्रंथोक्तो मेलको भूयादिति केचिद्वदंति ते ॥ ७९ ॥

भैरवांगस्य प्राधान्याद्रागोऽयं परिकल्पितः ।
भैरवस्यैव मेलेऽत्र सौकर्यार्थं मया पुनः ॥ ८० ॥

हिजेजः

भैरवाभिधमेले तु हिजेजो गीयते बुधैः ।
यावनिकमिदं रूपं स्वीकृतं ग्रंथकर्तृभिः ॥ ८१ ॥
संपूर्णो मग्रहांशश्च सायंगेयस्तथैव च ।
द्विधैवतो निहीनोऽपि केषांचित्कथ्यते मते ॥ ८२ ॥
धैवतो मृदुरारोहे ह्यवरोहे तु तीव्रकः ।
आदिशंति क्रमं भद्रं लक्ष्यमार्गविचक्षणाः ॥ ८३ ॥
भैरवे मेलनं केचिद्भैरव्याः संगिरंत्युत ।
ग्रंथेषु तूपरिख्यातं वर्णनं दृश्यते ध्रुवम् ॥ ८४ ॥
सायंगेयेषु रूपेषु मांशत्वमपवादकम् ।
इति मन्ये सुरागोऽयं प्रथमप्रहरे दिने ॥ ८५ ॥

अहीरी, ( अहीरभैरवः )

भैरवस्यैव मेलाच्च जाताऽहीरी सुनामिका ।
संपूर्णा भैरवांगाऽपि षड्जांशा व्यस्तमध्यमा ॥ ८६ ॥
पूर्वांगे भैरवो दृष्टो ह्युत्तरांगे हरप्रियः ।
वैचित्र्यमस्य रागस्य तेनैव स्यात्सुरक्तिदम् ॥ ८७ ॥
ग्रंथेषु केषुचित्प्रोक्ता भैरवीमेलनोत्थिता ।
आभीरी नामिकाप्यन्या नटभैरविमेलके ॥ ८८ ॥

भावभट्टमते.

“औडवः षाडवश्चैव संपूर्णश्च त्रिधा मतः ।
वसंतनंदकानंदस्वर्णाकर्षणपूर्वकाः ॥ ८९ ॥
गांधारपंचमाद्यश्च बहुलीपूर्वकस्ततः ।
रामभैरव इत्येवं भैरवो दशधा स्मृतः ॥ ९० ॥”
गुणक्री पारिजातोक्ता भैरवीमेलनेऽप्युत ।
अभावे निगयोः कैश्चित्सुगीता भैरवाव्हये ॥ ९१ ॥

## भैरवीमेले,

### भैरवी.

लक्ष्ये भैरविमेलो यो ग्रंथानां तोडिसंज्ञकः ।
अस्मान्मेलात्समुत्पन्ना भैरवी लोकविश्रुता ॥ १ ॥
आरोहेऽप्यवरोहे सा संपूर्णैव सदा मता ।
उत्तरांगप्रधानत्वे प्रातःकालोचिता भवेत् ॥ २ ॥
केचिदत्र वर्णयंति समौ संवादिनौ स्वरौ ।
धगावन्ये जगुः केचिद्बुधः कुर्याद्यथोचितम् ॥ ३ ॥
ग्रंथेषु भैरवी प्रोक्ता ह्यासावरीसुमेलके ।
ऋषभः कोमलो लक्ष्ये गृह्यते नात्र संशयः ॥ ४ ॥
प्रत्यक्षे तीव्ररिश्चापि दृश्यते रोहणे क्वचित् ।
लक्ष्यदृष्ट्या भवेन्नैतद्दोषास्पदं सतां मते ॥ ५ ॥
दाक्षिणात्यास्त्वधुनापि हिंदुस्थानीयभैरवीम् ।
तोडिनाम्नैव मन्यंते किं न जानन्ति पंडिताः ॥ ६ ॥
नटभैरविमेले हि भैरवीं स्थापयंति ते ।
ग्रंथसंगीतदृष्ट्या तन्न चापि स्याद्विसंगतम् ॥ ७ ॥

### मालकोशः

भैरवीमेलसंजातः स्मृतो रागः सुनामकः ।
मालकोशो गुणिख्यातो रिपवर्जित ओडवः ॥ ८ ॥
आलापनार्हताप्यस्य संमता गानवेदिनाम् ।
गंभीरप्रकृतिर्गीतस्तृतीयप्रहरात्परम् ॥ ९ ॥
शुद्धमध्यमवादित्वं प्रायो गांभीर्यवाचकम् ।
व्यस्तत्वं तत्स्वरेनिष्ठं रागजातिं प्रकाशयेत् ॥ १० ॥
विदग्धा गायका अत्र कुर्वंति बुद्धिपूर्वकम् ।
रिपयोगमल्पशस्ते रक्तिदमवरोहणे ॥ ११ ॥
कल्याणीमेलके तत्र हिंदोलो रिपवर्जितः ।
भैरवी मेलकेप्यत्र रिपहीनो भवेदयम् ॥ १२ ॥
केषुचिच्छास्त्रग्रंथेषु रागो मंगलकौशिकः ।
दृश्यते लक्षितश्चासौ मेले मालवगौडके ॥ १३ ॥

भूपालः

भैरवीमेलके प्रोक्तो रागो भूपालनामकः ।
औडवो मनिहीनोऽसौ धगसंवादभूषितः ॥ १४ ॥
लक्ष्ये प्रसिद्धिवैधुर्याद्रागोऽयं नातिविश्रुतः ।
गानं चास्य समाख्यातं प्रातर्नित्यं मनीषिभिः ॥ १५ ॥
अभ्यासात्पगयोः किंचित् तोडीरूपं समुद्भवेत् ।
निमयोस्त्वपकर्षाच्च बुधस्तदपवारयेत् ॥ १६ ॥
सायंगेया तु भूपाली प्रातर्गेयो भवेदयम् ।
इति संगीतवैचित्र्यं जनयेत्कौतुकं महत् ॥ १७ ॥

आसावरी.

भैरवीमेलसंजाता रागिण्यासावरी मता ।
नटभैरविमेलेऽपि गुणिभिः कैश्चिदीरिता ॥ १८ ॥
आरोहे गनिहीना स्यादवरोहे समग्रका ।
मग्रहाधांशिकापांता द्वितीयप्रहरे दिने ॥ १९ ॥
ग्रंथेषु केषुचित्सैव भैरवे मेलके स्थिता ।
लक्ष्यमार्गविरोधित्वान्न ग्राह्यं तन्मतं ध्रुवम् ॥ २० ॥

धनाश्रीः

भैरवीमेलके क्वापि धनाश्रीर्ग्रंथसंमता ।
आरोहे रिधवर्जं स्यादवरोहे समग्रकम् ॥ २१ ॥
लक्ष्ये धन्याश्रिका प्रोक्ता हरप्रियाह्वमेलके ।
गानं तस्याः समादिष्टं तृतीयप्रहरे दिने ॥ २२ ॥
षड्जपंचमयोरत्र संवादो बहुसंमतः ।
समुद्ग्राहो मंद्रनिना दृश्यते बहुशः कृतः ॥ २३ ॥
भैरव्युद्भूतधन्याश्रीः प्रातर्गेयैव युज्यते ।
तन्मेलस्योपपन्नत्वं प्रातरेव परिस्फुटम् ॥ २४ ॥

झीलफः, जंगूला च

भैरव्यासावरीयोगाज्झीलफो गुणिसंमतः ।
आधुनिकस्तुरागोऽयं यावनिकः परिस्फुटः ॥ २५ ॥
उत्तरांगस्य प्राधान्यमुपपन्नं सुनिश्चितम् ।
यतोऽयं गीयते प्रातर्गायनैर्लक्ष्यवेदिभिः ॥ २६ ॥

जंगूलामिश्रमेलोत्था प्रातर्गेया निरूपिता ।
केवलं लक्ष्यमादृत्य तत्र स्याद्रागनिर्णयः ॥ २७ ॥
रागे कर्णाटगौडाख्ये समृद्ध्या भैरवस्य तु ।
जुलुफोत्पत्तिराख्याता सोमनाथेन सूरिणा ॥ २८ ॥
भैरवासावरीयोगे लक्षितो झीलफः क्वचित् ।
भैरव्यासावरीसंधौ जंगूलोत्पत्तिरीरिता ॥ २९ ॥

मोटकी.

भैरवीमेलजा प्रोक्ता लक्ष्ये मोटकिरागिणी ।
आरोहे चर्षभो ह्रस्वो धैवतस्त्ववरोहणे ॥ ३० ॥
धैवतौ द्वौ प्रयोगे स्तो मध्यमो जीवकः स्वरः ।
वागीश्वर्यंगतो गीता श्रोतृचित्तसुखावहा ॥ ३१ ॥
दुर्लभं रक्तिदं रूपं मिश्रमेलोत्थितं त्विदम् ।
व्यवहारेऽल्पशो गीतं विवादास्पदमंजसा ॥ ३२ ॥
ग्रंथेषु मोटकी प्रोक्ता ह्युद्भूता पंचमाह्वयात् ।
सोऽपि हरप्रिये मेले वर्णितः पंडितैः क्वचित् ॥ ३३ ॥

शुद्धसामंतः

भैरवीमेलके प्रोक्तः शुद्धसामंतनामकः ।
आरोहे गनिहीनः स्यादवरोहे निवर्जितः ॥ ३४ ॥
मध्यमस्यात्र वादित्वं ह्यासावर्यांतु धस्य तत् ।
षड्जस्यापि वदंत्यन्ये प्रातःकालोचितं पुनः ॥ ३५ ॥
कर्णाटकीयपद्धत्यां प्रचारोऽस्य मतोऽधिकः ।
दृश्यतेऽत्र यतो गीतः संगृहीतो मयाप्यसौ ॥ ३६ ॥

वसंतमुखारी.

मेलनाद्भैरवीमेले भैरवाख्यस्य तत्वतः ।
वसंतार्धमुखारी सा प्रातःकालोचिता भवेत् ॥ ३७ ॥
पूर्वांगे भैरवः स्पष्ट उत्तरांगेतु भैरवी ।
अतिमनोहरं रूपं निर्मितं गीतवेदिभिः ॥ ३८ ॥
धैवतस्यात्र वादित्वं प्रातःकालप्रबोधकम् ।
अप्रसिद्धं भवेन्नूनं रूपमेतत्सुरक्तिदम् ॥ ३९ ॥
केचिदेतद्वर्णयंति हिजाजस्यैव लक्षणम् ।
ग्रंथेषु संमतं तस्माद्बुधः कुर्यात्स्वनिर्णयम् ॥ ४० ॥

## आसावरीमेले;

### आसावरी.

ग्रंथानां भैरवीमेलो लक्ष्ये त्वासावरीरितः ।
आसावरी भवेत्तज्जा द्वितीयप्रहरोचिता ॥ १ ॥
आरोहे गनिहीना स्यादवरोहे समग्रका ।
धैवतस्यैव वादित्वं सुमतं तत्र तद्विदाम् ॥ २ ॥
मध्यमेन ग्रहः प्रोक्तः पंचमे न्यसनं भवेत् ।
उत्तरांगप्रधानत्वाद्ग्रहः पूर्वांगगोचरः ॥ ३ ॥
अवरोहक्रमे केचिद्रिंकोमलं स्पृशंति तत् ।
मन्ये दोषास्पदं नैव नियमः शास्त्रसंमतः ॥ ४ ॥
गौडमालवमेलेऽपि ग्रंथेषु केषुचित्पुनः ।
आसावरी समाख्याता लक्ष्यमार्गविरोधि तत् ॥ ५ ॥
अंगमस्याश्च रागिण्याः प्रस्फुटमवरोहणे ।
मध्यमस्तत्र स्यादल्पः पगयोः संगतिस्तथा ॥ ६ ॥

### जौनपुरी.

आसावर्याः स्थिता मेले जौनपुरी बुधैर्मता ।
आरोहणे गवर्जं स्यादवरोहे समग्रकम् ॥ ७ ॥
निषादोऽत्रोल्लसेद्वादी कैश्चिद्धैवत ईरितः ।
गानमस्याः समीचीनं द्वितीयप्रहरे दिने ॥ ८ ॥
ऋषभेणात्र तीव्रेण ह्यासावर्याः प्रभेदनम् ।
तस्या अपि समीपत्वात्तदंगा बहुसंमता ॥ ९ ॥
आधुनिकमिदं रूपमासावरीसुमेलनात् ।
सूलतानहुसेनेन निर्मितमिति कथ्यते ॥ १० ॥
आसावरीमध्यमाद्योर्योगमिच्छंति केचन ।
द्वितीयप्रहरे नूनं न चाप्येत द्विसंगतम् ॥ ११ ॥

### देवगांधारः

आसावरीसुमेलाच्च देवगांधार ईरितः ।
आरोहे रिधवर्जं स्यादवरोहे समग्रकम् ॥ १२ ॥
मध्यमेन ग्रहो न्याय्यः षड्जे न्यासः समुच्चरेत् ।
द्वितीयप्रहरे गानमस्य रागस्य युज्यते ॥ १३ ॥

सपयोरत्र संवादो विशेषेण सुखावहः ।
धनाश्र्यासावरीरूपे प्रदर्श्येते सपाटवम् ॥ १४ ॥
धनाश्र्यंगं रोहणे स्याद्वितीयमवरोहणे ।
उत्तरांगस्य प्राधान्यात्तदेव प्रभवेत्पुनः ॥ १५ ॥
ग्रंथेषु केषुचिच्चैष भैरवे मेलके मतः ।
अगनिः पांशकः सांतो लक्ष्ये नैतत्सुसंमतम् ॥ १६ ॥
केचिदेनं संगिरंति हरप्रियाख्यमेलके ।
विरुध्यते यतो लक्ष्ये नैवस्यात्संमतं सताम् ॥ १७ ॥
कर्णाटकीयपद्धत्यां शंकराभरणस्वरैः ।
गानमस्य समादिष्टं न तल्लक्ष्येऽत्र दृश्यते ॥ १८ ॥
विदग्धा गायकाः केचिद्भैरवस्य सुमिश्रणात् ।
आसावर्यामुद्धरंति रागमेनं च कामतः ॥ १९ ॥

सिंधभैरवी.

आसावरीसुमेलाच्च भैरवी सिंधपूर्विका ।
आरोहे चावरोहेऽपि संपूर्णा मध्यमांशिका ॥ २० ॥
अवरोहे विकल्पेन रिकोमलापि दृश्यते ।
द्वितीयप्रहरे गानमस्याः सर्वसुसंमतम् ॥ २१ ॥
पंचमे षड्जमारोप्य भैरवी गीयते यदि ।
सिंधभैरविकोत्पत्तिर्नूनं स्यात्तत्र प्रस्फुटा ॥ २२ ॥
मंद्रमध्यस्वरैः प्रायो गायंति गानकोविदाः ।
तत्रैवास्या भवेच्छोभा कथितं तद्विदां मतम् ॥ २३ ॥

देशी.

आसावरी संमेलने जाता देशी गुणिप्रिया ।
आरोहे गधवर्ज स्यादवरोहे समग्रकम् ॥ २४ ॥
समयोरत्र संवादो गकंपनं मनोहरम् ।
गानं चापि समाख्यातं द्वितीयप्रहरे दिने ॥ २५ ॥
संगतिः स्वरयो रिन्योः सारंगांगं प्रदर्शयेत् ।
मध्याह्नात्पूर्वकं तस्माद्गानमस्याः सुसंमतम् ॥ २६ ॥
आसावरी ह्युत्तरांगे पूर्वांगे विलसेत्पुनः ।
सारंगो मधुरो राग इति लक्ष्यविदां मतम् ॥ २७ ॥

केचिद्देश्यामादिशंति तीव्रधैवतयोजनम् ।
अन्येतु धैवतद्वंद्वं बुधः कुर्याद्यथोचितम् ॥ २८ ॥

दरबारः

मेलादासावरीनाम्नोदरबारः सुसंमतः ।
आलापार्हः प्रियो लोके निशियामे द्वितीयके ॥ २९ ॥
स्याद्वैचित्र्यमत्र रूपे ह्यखिलं मंद्रस्थानके ।
दुर्बलो गो रोहणे स्याद्धैवतो वर्जितोऽन्यके ॥ ३० ॥
मध्यस्थो रिर्मतो वादी नीपयोः संगतिः शुभा ।
आंदोलनं तु गांधारे विलंबितो लयः पुनः ॥ ३१ ॥
कर्णाटस्यापभ्रंशात्स्यात्कानडानामसंभवः ।
दरबारः स्वयं शब्दः स्पष्टो यावनिको मतः ॥ ३२ ॥
आरोहणे गदौर्बल्यात्काफीरागादिका नहि ।
अवरोहे धवर्जनादासावरी न कर्हिचित् ॥ ३३ ॥

अड्डाणः

आसावर्याः सुमेलाच्च रागोऽड्डाणोऽपि निश्चितः ।
केचिदेनं वर्णयंति हरप्रियसमाश्रितम् ॥ ३४ ॥
ग्रंथेषु धैवतस्तीव्रः श्रूयते शास्त्रसंमतः ।
लक्ष्ये तु कोमलस्यापि प्रयोगोऽस्ति न संशयः ॥ ३५ ॥
मग्रहस्तारषड्जांशो ह्यवरोहमनोहरः ।
रात्र्यां तृतीयके यामे गीतोऽसौ गायकोत्तमैः ॥ ३६ ॥
गधयोर्दुर्बलत्वेन सारंगांगं सुसंभवेत् ।
विलोमे पगसंगत्या बुधस्तदपवारयेत् ॥ ३७ ॥
रागोऽठाणः क्वचिद् दृष्टो हरिकांभोजिमेलके ।
कर्णाटकीयपद्धत्यां स चास्माद्भेदमर्हति ॥ ३८ ॥
दरबारे यथा प्रोक्ता मंद्रमध्यविचित्रता ।
तारमध्यगता सैव प्रोच्यतेऽत्र विचक्षणैः ॥ ३९ ॥
अर्द्धरात्र्याः परं गानं तारषड्जविचित्रकम् ।
रागा एतादृशास्तत्र भवेयुः सुप्रवेशकाः ॥ ४० ॥

### कौशिकः

संयोगो मालकोशस्य कानडायां भवेद्यदा ।
तदा स्यात्कौशिकोत्पत्तिरिति कैश्चित्सुनिश्चितम् ॥ ४१ ॥
मालकोशगतो मस्तु कस्य न स्यात्सुखावहः ।
तस्यैवात्र सुवादित्वाद्वैचित्र्यं नियतं स्फुटम् ॥ ४२ ॥
पंचमस्य प्रयोगाच्च धनाश्र्यंगं शुभं भवेत् ।
मालकोशस्य संस्पर्शाद्बुधस्तत्परिमार्जयेत् ॥ ४३ ॥
केचिदेनं मध्यमांशं हरप्रियाह्वजं जगुः ।
लक्ष्याध्वनि तथैवापि प्रयुक्तो दृश्यते क्वचित् ॥ ४४ ॥

### खटः

नटभैरविमेलाच्च खटरागस्य संभवः ।
धैवतांशो मग्रहोऽसौ पंचमन्यास उच्यते ॥ ४५ ॥
संकीर्णत्वात्कैश्चिदत्र मिश्रमेलत्वमीरितम् ।
शंकराभरणस्यैव मिश्रणं बहुसंमतम् ॥ ४६ ॥
प्रकृत्या चपलः पूर्णो बहुभिर्गमकैर्युतः ।
उत्तरांगप्रधानत्वे प्रातःकालः परिस्फुटः ॥ ४७ ॥
तीव्रगांधारसाहित्यं भैरवांगप्रदर्शकम् ।
तीव्रधस्य प्रयोगेण तस्यापि स्यान्निवारणम् ॥ ४८ ॥
पूर्वांगे भैरवांगं स्यादासावर्यंगमन्यके ।
मिश्ररूपं सुप्रगीतं सर्वेषामतिरक्तिदम् ॥ ४९ ॥
प्रतिपन्नं पुनः कैश्चिदत्र षड्रागमिश्रणम् ।
याथार्थ्यं खटनाम्नोऽपि तैरेव ह्युपक्रम्यते ॥ ५० ॥

### झीलफः

आसावरीमेलकेऽन्यो झीलफः परिकीर्तितः ।
राग आधुनिको ह्येष मिश्रमेलसमुत्थितः ॥ ५१ ॥
कलिंगडो भैरवो वा न्यासे स्याद्तिशोभनः ।
जौनपूरी खटश्चापि तत्र चावयवौ मतौ ॥ ५२ ॥
प्रातःकालप्रगेयत्वादुत्तरांगसुभूषितः ।
धैवतस्य सुवादित्वं नूनं स्यादत्र रक्तिदम् ॥ ५३ ॥

## तोडीमेलः

### तोडी.

मेले पंतुवराळ्याख्ये लक्ष्ये तोडी प्रकीर्तिता ।
धैवतांशा सुसंपूर्णा गंभीरप्रकृतिर्मता ॥ १ ॥
आरोहणे रिदौर्बल्यं प्रातःकालप्रसूचकम् ।
गानमस्या मतं तज्ज्ञैर्द्वितीयप्रहरे दिने ॥ २ ॥
धैवतस्यात्र वादित्वे गेयत्वं दिवसे स्फुटम् ।
गांधारं वादिनं प्राहुः केचिल्लक्ष्यविशारदाः ॥ ३ ॥
प्रातःकालोचितं न स्यात्तीव्रमस्य प्रयोजनम् ।
लोके तस्य प्रसक्तत्वात्स्वीकृतमपवादकम् ॥ ४ ॥
तीव्रमालंकृता रागाः प्रातःकाले मता बुधैः ।
गौडसारंगहिंदोलतोड्याद्या लक्ष्यवर्त्मनि ॥ ५ ॥
शास्त्रग्रंथेषु ते सर्वे शुद्धमालंकृताः पुनः ।
कुर्वंति महदाश्चर्यं निश्चितं मर्मवेदिनाम् ॥ ६ ॥
लक्ष्येऽधुना प्रगीयंते कैश्चित्प्रख्यातगायकैः ।
प्रकारास्तत्र तोड्यास्ते शुद्धमध्यमसंयुताः ॥ ७ ॥
मूलतानी नामिकासौ रागिणी चात्र मेलके ।
दिनशेषे मता तज्ज्ञैः परमेलप्रवेशिका ॥ ८ ॥
तत्रापि च रिधत्यागादारोहे दृश्यते स्फुटम् ।
संध्याकालसमीपत्वमिति सर्वं सुसंगतम् ॥ ९ ॥

### गुर्जरीतोडी.

वराळीमेलके ख्याता गुर्जरीतोडिका तथा ।
आरोहे चावरोहेऽपि पंचमो वर्जितो भवेत् ॥ १० ॥
वादी स्याद्धैवतस्तत्र रिस्वरोऽमात्यसंनिभः ।
गानमनुमतं तस्या दिने यामे द्वितीयके ॥ ११ ॥
ग्रंथेषु गुर्जरी प्रोक्ता भैरवे मेलके तु सा ।
स्वतंत्ररूपिणीत्यत्र विरोधो नैव शंक्यताम् ॥ १२ ॥
संपूर्णा गुर्जरी गीता कैश्चिल्लक्ष्येऽपि सांप्रतम् ।
रागभ्रांतिकरा नित्यं नासावत्र सुसंमता ॥ १३ ॥

मीयांतोडी.

वराळीमेलके चैव प्रोक्ता तत्र सुनूतना ।
व्यवहारगता तोडी मीयांख्यया सुसंस्कृता ॥ १४ ॥
धैवतस्यैव वादित्वं संवादी रिस्वरो भवेत् ।
मंद्रमध्यस्वरैर्लोके निरंतरं सुरक्तिदा ॥ १५ ॥
विलंबितलयेनास्या विस्तारः स्यान्मनोहरः ।
अल्पत्वं तु पंचमस्य कुर्याद्रागप्रभेदनम् ॥ १६ ॥
अंगीकृतः प्रकारोऽयं तोड्या लक्ष्ये विचक्षणैः ।
उपपन्नं हि तद्गानं द्वितीयप्रहरे दिने ॥ १७ ॥

दरबारीतोडी.

दरबारी तथा तोडी यत्रस्यातां सुमिश्रिते ।
दरबारीतोडिकाख्या भवेत्तत्र स्फुटा स्वयम् ॥ १८ ॥
मनिस्वरस्थित्यधीना स्तोडीभेदाश्च सांप्रतम् ।
प्रायशो लक्ष्यमार्गेस्यु रितिप्रज्ञा ब्रुवंति ते ॥ १९ ॥
दरबारीतोडिकाया मासावरीप्रवेशनात् ।
तोडी विलासखान्याद्या कथ्यते लक्ष्यपंडितैः ॥ २० ॥
यावनिकाः प्रकारास्ते लक्ष्येऽनेके प्रकीर्तिताः ।
भिन्नरागमिश्रणोत्था अनिशं वादमूलकाः ॥ २१ ॥
आसातोडी गुर्जरी च गांधार्यपि बहादुरी ।
लक्ष्मी देशी तथैवान्ये लाचारीखटतोडिके ॥ २२ ॥
सुग्राही मुद्रिका सूहा जौनपूरी तथापरा ।
तोडीभेदा गीतविज्ञैः स्वीकृता लक्ष्यवर्त्मनि ॥ २३ ॥
मिश्रणं स्यात्कृतं येषां तन्नाम चेत्परिस्फुटम् ।
नकिंचिदपि दोषाय तत्रेति प्रतिभातिमे ॥ २४ ॥
रागाणां नियमा व्यक्ता दृश्यन्ते यत्र निर्मितौ ।
उपपन्नं भवेत्तत्र रागत्वं नैवसंशयः ॥ २५ ॥
रंजनाद्रागता प्रोक्ता सर्वेषामिति संमतम् ।
यद्यत्स्यात्तद्गुणोपेतं मानमप्यर्हयेत् सताम् ॥ २६ ॥
मिश्ररागप्रपंचोऽयं वादमूलो यतो भवेत् ।
ग्रंथेऽत्रापि तदुत्सर्गो बुद्धिपूर्वं कृतो मया ॥ २७ ॥
कैश्चिद्यावनिकैः प्रज्ञैरुन्नीतमविशंकितम् ।
अस्मत्संगीतभांडारमिति मतं नचाद्भुतम् ॥ २८ ॥

सर्पर्दा तुरुष्कतोडी हिजेजो बाखरेजकः ।
पुष्क ईराखजूलूफौ नवरोजी हुसेनिका ॥ २९ ॥
उज्वलो मूसली चैव ग्रहपंचसुगादुगाः ।
संतो यावनिका रागाः सोमनाथेन लक्षिताः ॥ ३० ॥
केदारगौडरूपे हि नानारूपविमिश्रणात् ।
उपर्युक्ताः समुन्नीता इति तेन समर्थ्यते ॥ ३१ ॥
पद्धत्यां दाक्षिणात्यानामद्यापि लक्षिताः पुनः ।
यावनिका मता रागा लोके रक्तिप्रदाः स्वयम् ॥ ३२ ॥
न मे दोषास्पदं भाति तत्र किंचिद्धि न्यायतः ।
मते मम भवेन्नूनं संगीतोन्नतिरेव सा ॥ ३३ ॥

मूलतानी.

तोडीमेलसमुत्पन्ना मूलतानी निरूपिता ।
आरोहे रिधहीना स्यात् पंचमांशा सुसंमता ॥ ३४ ॥
मगयोः संगतिश्चित्रा तयोरेव सुदोलनम् ।
भवेद्रक्तिकरं नित्यं तृतीयप्रहरोत्तरम् ॥ ३५ ॥
आरोहे रिधहीनत्वादपराह्णत्वमीरितम् ।
प्रसिद्धो नियमोऽप्येष सूरीणां पूर्ववर्तिनाम् ॥ ३६ ॥
मध्याह्नार्हान् धगाल्पांस्तान् गीत्वा रागान् यथोचितम् ।
प्रवर्तते रिधत्यक्तान् गातुं गातुर्मनः स्वयम् ॥ ३७ ॥
मूलतानीगते गेतु तीव्रत्वारोपणे पुनः ।
झटित्युत्पत्स्यते तत्र श्रीरागस्यैव रूपकम् ॥ ३८ ॥
शेषयामे दिने प्रायः समपाः सबला ध्रुवम् ।
रहस्यं तन्निरवद्यं को न वेत्तीह मर्मवित् ॥ ३९ ॥
धन्याः खलु पंडितास्ते यैरिदं कौतुकं महत् ।
निर्मितं बुद्धिसामर्थ्यात् संततं विश्वमोहनम् ॥ ४० ॥

भावभट्टमते,

"प्रथमा शुद्धतोडी स्याद्देशीतोडी द्वितीयका ।
बहादुरी तृतीया स्याद्गुर्जरी च चतुर्थिका ॥ ४१ ॥
छायातोडी पंचमी स्यात् षष्ठी तोडी वराटिका ।
हुसेनी सप्तमी प्रोक्ता जौनपूरी तथाष्टमी ॥"
आसातोडी च नवमी नवधा कीर्तिता बुधैः ॥ ४२ ॥

## पूर्वीमेले,

### पूर्वी.

शास्त्रे रामक्रियामेलो लक्ष्ये पूर्वीति कीर्तितः ।
कर्णाटकीयपद्धत्यां भाषितः कामवर्द्धनी ॥ १ ॥
एतन्मेलात्समुत्पन्ना पूर्वी सर्वगुणिप्रिया ।
सायं गेयाऽथ संपूर्णा गांधारांशपरिष्कृता ॥ २ ॥
व्यवहारे प्रसिद्धैषा श्रीरागस्यैव रागिणी ।
गानं सुनिश्चितं तस्याः सायंकाले मनोहरम् ॥ ३ ॥
श्रीरागे रिषभो वादी गांधारोऽत्र समीरितः ।
उद्धारोऽस्या भवेद्युक्तः श्रीरागानंतरं सदा ॥ ४ ॥
प्रयोगः शुद्धमस्यापि सह गेन मतो मनाक् ।
अवरोहे न मे भाति शास्त्रदृष्ट्यातिबाधकः ॥ ५ ॥
केषुचिच्छास्त्रग्रंथेषु रागिणीयं निरूपिता ।
प्रस्फुटा भैरवे मेले मध्यमस्तेन कोमलः ॥ ६ ॥
तीव्रमोऽपेक्षितोऽवश्यं सायंगेयत्वसूचकः ।
अतो मन्ये प्रयुक्तौ तौ विदग्धैर्मध्यमावुभौ ॥ ७ ॥
वैचित्र्यं तीव्रमस्यैव दिनांते नित्यरक्तिदम् ।
उपकारी शुद्धमः स्याच्छ्रोतॄणां रागनिर्णये ॥ ८ ॥
मध्यमयोः सुसंयोगः सायं नान्यत्र चेदृशः ।
प्रायो भवेत्तत्सुबोधं रागनिर्णयसाधनम् ॥ ९ ॥
तीव्रत्वं धैवतेऽभीष्टं संप्रदाये तु दक्षिणे ।
लक्ष्यमार्गमनुलंघ्य कार्यमत्र यथोचितम् ॥ १० ॥
रागचंद्रोदये ग्रंथे पुंडरीकमहात्मना ।
गौडमालवके मेले पूर्वी सांशा प्रकीर्तिता ॥ ११ ॥
संधिप्रकाशगेयेषु सामीप्यं नियतं महत् ।
भेदकं पंचमं लिंगं स्वीकुर्वंति विचक्षणाः ॥ १२ ॥
रामक्रिया मता सायं मनित्यक्ताधिरोहणे ।
रामकेलीं प्रगे चाहुर्यतोऽसौ शुद्धमध्यमा ॥ १३ ॥
उत्तरांगप्रधानेषु रागेष्वपि तथैवच ।
दृश्यते चरमे यामे परजाख्यो द्विमध्यमः ॥ १४ ॥




सुबोधं सरलं रूपं सायंगेयं सुरक्तिदम् ।
रागाश्रयत्वमाप्नोति लक्ष्याध्वनि मते सताम् ॥ १५ ॥
अथवैतन्मया प्रोक्तं रहस्यं सकलं पुरा ।
पुनरुक्तिर्न चापि स्यात् प्राप्तकालेति भाति मे ॥ १६ ॥
केचिदुच्चतरावूचुः स्वरावत्र रिधौ मनाक् ।
श्रीरागस्थाभ्यां प्रपंचः संभवेद्वादमूलकः ॥ १७ ॥
यथा जनपदे प्रायो राजमार्गा व्यवस्थिताः ।
तथैव स्युर्मेलरागाः संगीतनगरे ह्यमी ॥ १८ ॥
क्षुद्रमार्गपरिभ्रष्टाः प्रमुखेषु पतंति ते ।
जन्यरागपरिभ्रांता मेलरागेषु केवलम् ॥ १९ ॥

श्रीरागः

पूर्वीमेलसमुत्पन्नः श्रीरागो लक्ष्यसंमतः ।
शास्त्रे ख्याता तदुत्पत्तिर्हरप्रियाख्यमेलके ॥ २० ॥
आरोहे गधहीनत्वं रागेऽत्र बहुसंमतम् ।
पूर्णत्वमवरोहे स्यान्नियमेनातिरक्तिदम् ॥ २१ ॥
ऋषभोऽत्र भवेद्वादी संवादी पंचमो भवेत् ।
केचिद्विपर्ययं प्राहुर्न तत्रापि विसंगतिः ॥ २२ ॥
दाक्षिणात्या सदैवैनमंगीकुर्वंति मेलने ।
हरप्रियाव्हये नूनं शास्त्रग्रंथानुसारिणः ॥ २३ ॥
गंभीरप्रकृतिर्नित्यं विलंबितलयोद्भृतः ।
अवश्यं स्याद्दिनांतेऽसौ भुक्तिमुक्तिप्रदायकः ॥ २४ ॥
श्रीरागांगं केवलं तत् स्वतंत्रं मन्यते यतः ।
सावधानं यथान्यायमभ्यस्यं गायनार्थिभिः ॥ २५ ॥
जनकसंनिभो लोके ह्यादिरागः समीरितः ।
औडवः सन् विधानं तद्विचार्यं मार्मिकैर्जनैः ॥ २६ ॥
अथवा लोकप्रियास्ते पुंरागा औडवाहि षट् ।
स्वयमुत्पादका लक्ष्ये पूर्णानामिति विश्रुतम् ॥ २७ ॥
संवादित्वं धैवतस्य क्वचित्समर्थितं पुनः ।
न युक्तं तत्समारोहे तत्स्वरस्यैव गोपनात् ॥ २८ ॥

गौरी. (द्वितीया)

पूर्वीमेले समादिष्टा द्वितीया गौरिका पुनः ।
आरोहे गधहीना स्यादवरोहे गवर्जिता ॥ २९ ॥
ऋषभोऽत्र भवेद्वादी सहचारी तु पंचमः ।
गानमस्याः समीचीनं लोके सायं समीरितम् ॥ ३० ॥
श्रीरागस्य प्रसिद्धांगं रूपेऽस्मिन्नपि प्रस्फुटम् ।
निषादो मंद्रभागस्थो नूनं रक्तिप्रदो नृणाम् ॥ ३१ ॥
अथ प्रसंगतो वक्ष्ये मतभेदान् यथायथम् ।
पुरावृत्तं च रागिण्या अस्याः स्याद्येन प्रस्फुटम् ॥ ३२ ॥
श्रीरागः पंडितैः पूर्वैः काफीमेले सुलक्षितः ।
आरोहणे गधत्यक्तः संपूर्णोऽप्यवरोहणे ॥ ३३ ॥
गौरी पुनर्मता तैश्च मेले भैरवनामके ।
धगोनारोहणे नित्यमवरोहे समग्रिका ॥ ३४ ॥
युक्तं नु वर्णनं चैतत्तत्कालवर्तिलक्ष्यतः ।
मेलभेदे ह्यवश्यं स्याद्रूपभेदस्य संभवः ॥ ३५ ॥
मते तूत्तरकालीने संगीते परिवर्तनात् ।
रागावेतावुभावुक्तौ पूर्वीमेलसमाश्रितौ ॥ ३६ ॥
एकमेलाश्रितत्वे स्यात् समाने लक्षणे पुनः ।
अवश्यं गायनं कष्टं ततो वैमत्यसंभवः ॥ ३७ ॥
केचिद्गौर्यामादिशंति समूलं गधवर्जनम् ।
अन्ये पुनः संगिरंति पंचमस्यैव लंघनम् ॥ ३८ ॥
गौड्यधगा तथा र्यंशा सोमनाथेन भाषिता ।
तल्लक्षणाऽपरा चैती सायंगेयेति कीर्तिता ॥ ३९ ॥
निपुणा गायकाः केचिद्द्विमध्यमप्रयोजनात् ।
श्रीरागांगमनुवृत्य रागिणीमुद्धरंति ते ॥ ४० ॥
भावभट्टकृते ग्रंथे रत्नाकरे प्रकथ्यते ।
अष्टधा रागिणी गौरी नानारूपसमाश्रिता ॥ ४१ ॥

दीपकः

कामवर्द्धनिकामेलाद्दीपको गुणिसंमतः ।
आरोहणे रिवर्जं स्यादवरोहे निवर्जितम् ॥ ४२ ॥

षड्जस्यैव प्रधानत्वं संमतं शास्त्रवेदिनाम् ।
गानं सुसंमतं मन्ये दिने यामे तुरीयके ॥ ४३ ॥
केचिदेनं निर्दिशंति संपूर्णं सांशकं पुनः ।
कल्याणीमेलजं प्राहुर्निहीनं कुत्रचिद्बुधाः ॥ ४४ ॥
मालवाख्ये मतो मेले मनिहीनोऽपि सांशकः ।
पारिजाते मते मेतु प्रथमो हि सुसंगतः ॥ ४५ ॥
लुप्तोऽयं राग इत्येतद्यदुक्तं लक्ष्यपंडितैः ।
न मे माति मतं तेषां केवलं युक्तिसंगतम् ॥ ४६ ॥
दीपकानां प्रज्वलनं स्वयं दृष्ट्वा सुदुष्करम् ।
गायने स्याद्विलोपन मस्यादिष्टं विचक्षणैः ॥ ४७ ॥
दीपकस्य तिरोभावे श्रीरागे परिवर्तनम् ।
रिधयोः कोमलत्वेन कदाचिद्विबुधैः कृतम् ॥ ४८ ॥

रेवा.

पूर्वीमेलसमुद्भूता ख्याता रेवा सुखप्रदा ।
आरोहे चावरोहेऽपि मनिहीनैव संमता ॥ ४९ ॥
वर्जने निमयोः सिद्धा गपयोः संगतिः स्वयम् ।
षड्जांशा गांशिका चाऽपि सायंगेया बुधैर्मता ॥ ५० ॥
उत्तरांगप्रधानत्वे विभासांगं परिस्फुटम् ।
परित्यागो मतो तत्र निमयोरिति विश्रुतम् ॥ ५१ ॥
भैरवे मेलके प्रोक्ता रेवगुप्तिर्निरंतरम् ।
सैवेयं स्यादिति केचिच्छंकयंति विचक्षणाः ॥ ५२ ॥
वादित्वे सति पूर्वांगे सायंगेयत्वमीप्सितम् ।
तत्पुनश्चेदुत्तरांगे प्रातर्गेयत्वसूचकम् ॥ ५३ ॥

विभासः (द्वितीयः)

पूर्वीमेलात्समुत्पन्नो रागोऽपरो बुधैर्मतः ।
विभासो योग्यनामाऽसौ प्रातर्गेयः सुरक्तिदः ॥ ५४ ॥
धैवतस्यैव वादित्वं प्राबल्यमुत्तरांगके ।
विभांशुकस्यापभ्रंशे विभास इति युज्यते ॥ ५५ ॥
सारामृते शास्त्रग्रंथे विभांशुकः प्रकीर्तितः ।
मनिहीनः प्रभाताहस्तन्मया ध्वनितं पुरा ॥ ५६ ॥

गपयोः संगतिर्नित्यं नियमेन भवेच्छुभा ।
शुद्धभावसुसंगीतो ह्यवश्यं द्रावयेन्मनः ॥ ५७ ॥
यथा सायं मता रेवा तथैवायं भवेत् प्रगे ।
सादृश्ये मनिवर्जत्वे वादिभेदेन भित्स्फुटा ॥ ५८ ॥
केचिदेनं निर्णयंति मारवामेलने बुधाः ।
अहोबलादिकास्त्वन्ये पूर्वीमेले वदंत्यमुम् ॥ ५९ ॥
लक्ष्याध्वनि पुनः कैश्चिद्गीतोऽयं शुद्धमेलके ।
रूपमेतत्सुविख्यातं देशकारस्य केवलम् ॥ ६० ॥
धैवतात्पंचमे न्यासो मार्मिकेण सुसाधितः ।
भ्रांतिविच्छेदको भूयादवश्यं रागनिर्णये ॥ ६१ ॥

मालवी.

पूर्वीमेले समादिष्टा मालवी रागिणी बुधैः ।
आरोहे स्यान्निदौर्बल्यमवरोहे तु धस्य तत् ॥ ६२ ॥
श्रीरागांगा यतो गेया वैचित्र्यं रिस्वरे स्फुटम् ।
गानमस्या भवेत् सायं सर्वरक्तिप्रदायकम् ॥ ६३ ॥
संधिप्रकाशगेयेषु संगतौ मधुरौ गपौ ।
रागेऽत्रापि संप्रयुक्तौ गायकैस्तौ सपाटवम् ॥ ६४ ॥
अपूर्वं रूपकं त्वेतल्लक्ष्यपंडितनिर्मितम् ।
रक्तिदं संमतं यस्माद्ग्राह्यमेव मनीषिणाम् ॥ ६५ ॥
ग्रंथवाक्योल्लंघनेऽपि ये रागाः स्युर्जनप्रियाः ।
मन्ये तेषामुपांगत्वं देश्यां नैवातिबाधकम् ॥ ६६ ॥
अथवा मार्गमेनं हि समालंब्य पुरातनैः ।
समुन्नीतं तदाचार्यैः संगीतमिति भाति मे ॥ ६७ ॥
मालवीं रागिणीं केचिदाहुर्मारुवमेलने ।
ग्रंथे सारामृते दृष्टा मेलके गौडमालवे ॥ ६८ ॥
पूर्वी गौरी मालवी च ललिताह्वा पराजिका ।
वसंती रेवगुप्तिश्च शास्त्रे भैरवमेलजाः ॥ ६९ ॥
तथाप्येतेषु रूपेषु सर्वेषु दृश्यतेऽधुना ।
तीव्रमस्य प्रयोगस्तद्विचार्यं मर्मवेदिभिः ॥ ७० ॥

ग्रंथेषु केषुचित्तत्र कांभोजी मेलगा मता ।
अतिवक्रस्वरूपाऽपि मालवी रागिणी ध्रुवम् ॥ ७१ ॥
मालवो भैरवोत्थोऽसौ तथा मालवगौडकः ।
मालवीरूपभिन्नत्वाद्भिन्नावेव सतां मते ॥ ७२ ॥
टक्कभाषा मालवी या शास्त्रेषु परिकीर्तिता ।
तस्या एत्र भवेदेतत्कदाचित्परिवर्तनम् ॥ ७३ ॥
श्रीरागांगाश्च पूर्व्यंगा रागाः सायं विशेषतः ।
रिपसंवादयुक्ताद्या गनिसंवादजांऽतिमाः ॥ ७४ ॥

### त्रिवेणी.

पूर्वीमेलसमुद्भूता त्रिवेणी लक्ष्यसंमता ।
आरोहे चावरोहेऽपि मध्यमो वर्जितस्वरः ॥ ७५ ॥
श्रीरागांगा यतोऽभीष्टा लक्ष्यज्ञानां च सांप्रतम् ।
रिस्वरस्यैव वादित्वं सुग्राह्यमिति भाति मे ॥ ७६ ॥
संगतिर्गपयोः सिद्धा मध्यमस्य विवर्जनात् ।
अवरोहेण वर्णेन कुर्यान्मानसरंजनम् ॥ ७७ ॥
संपूर्णा रिग्रहांशाऽसौ सन्यासापि मता क्वचित् ।
मदुर्बला हि लक्ष्येस्यात्सर्वलोकप्रिया भृशम् ॥ ७८ ॥
अन्ये तां मारवामेले पंचमांशां ब्रुवंति ते ।
सायंगेया विकल्पेन बुधः कुर्यात्स्वनिर्णयम् ॥ ७९ ॥
यत्किंचिदप्यंगीकृतं भवेद्रूपं सतां मते ।
सुव्यक्तनियमाबद्धं नैव स्याद्दोषजं पुनः ॥ ८० ॥
देशिकारस्तथा गौरी तृतीया पूर्विका सदा ।
रागिण्यामत्र संयुक्ता इति लक्ष्यविदां मतम् ॥ ८१ ॥

### टंकिरा.

पूर्वीमेले सुप्रसिद्धा रागिणी टंकिका मता ।
भार्या प्रोक्ता लक्ष्यविद्भिः श्रीरागस्यैव पांशिका ॥ ८२ ॥
श्रीरागांगेन सा लक्ष्ये नूनं सर्वत्र लक्षिता ।
गानं चाभिमतं तस्याः सायंकाले प्रतिष्ठितम् ॥ ८३ ॥

मालवी त्रिवणा गौरी पूर्वी टंकी तथैव च ।
मता एता बुधैः पंच श्रीरागस्य वरांगनाः ॥ ८४ ॥
पंचमो यत्र वादी स्यात् संवादी षड्जको भवेत् ।
श्र्यंगसंभूषितत्वात्तु रिषभोऽमात्यको भवेत् ॥ ८५ ॥
महीनामथवा पूर्णां केचिदन्ये विदो विदुः ।
त्रिवेण्यां रिस्वरो वादी ह्यतस्तस्या भिदा स्फुटा ॥ ८६ ॥
वादिभेदाद्रागभेद इति लक्ष्यविदां मतम् ।
सर्वत्रैव सुप्रसिद्धं महद्वैचित्र्यकारकम् ॥ ८७ ॥
तथापि स्पृश्यते कैश्चित् त्रिवेण्यां मध्यमो मनाक् ।
विलोमे रागभेदार्थं भात्येवं युक्तिसंगतम् ॥ ८८ ॥
रागबोधे मतष्टकः सांशन्यासग्रहः स्वयम् ।
वसंतमेलने सायं संपूर्णो गुणिसंमतः ॥ ८९ ॥
प्रदोषे गीयते यस्मात् तीव्रमध्यमयोजनम् ।
सुसंगतं तत्वमेतत् पूर्वमेवोदितं मया ॥ ९० ॥
आरोहे न धगोनत्वं श्रीगौर्यां तेन प्रस्फुटे ।
पूर्वी द्विमध्यमा प्रोक्ता मालवी धनिदुर्बला ॥ ९१ ॥

जेताश्रीः.

कामवर्द्धनिकामेले जेताश्रीः कीर्त्यते सदा ।
आरोहे रिधवर्जं स्यादवरोहे समग्रकम् ॥ ९२ ॥
गांधारांशा तथा सांता सायंकालोचिता मता ।
कैश्चित्सैवोदिता प्रातनैवं भाति सुसंगतम् ॥ ९३ ॥
अन्ये तां तीव्रधां मत्वा मारवामेलने जगुः ।
अपसार्य मतान्यन्यान्युपर्युक्तैव स्वीकृता ॥ ९४ ॥
वराटी देशकारश्च धवलाख्या ततः पुनः ।
मिलंत्यत्र सप्रमाणमिति लक्ष्यविदो विदुः ॥ ९५ ॥
रिधत्यक्ता यतो नान्या रागिण्येतादृशी मता ।
सायंगेया ततस्तस्या दृश्यते प्रस्फुटा भिदा ॥ ९६ ॥

पूरियाधनाश्रीः.

कामवर्द्धनिकामेलाज्जाता पूर्याधनाश्रिका ।
आरोहे चावरोहेऽपि संपूर्णा गुणिसंमता ॥ ९७ ॥
पूर्वी धनाश्रिका योगाद्रूपमेतत्समुत्थितम् ।
भवेदिति मतं तत्र केषांचिल्लक्ष्यवेदिनाम् ॥ ९८ ॥
शुद्धमध्यमहीनत्वाद्वादित्वात्पंचमस्य च ।
स्यात्पूर्वीनामिकायास्तु रागिण्या भित्परिस्फुटा ॥ ९९ ॥
श्रीरागस्य प्रसिद्धांगं नचैवात्रोपलभ्यते ।
अतस्तदंगभूतास्ते विविक्ताः सुखमंजसा ॥ १०० ॥
उत्तरांगप्रधानेषु वसंतपरजादिषु ।
द्विमध्यमप्रयोगत्वाद्व्यर्थं तत्रापि शंकनम् ॥ १०१ ॥
स्वीकुर्वंति पुनः केचिदेनां धनाश्रिकां स्वयम् ।
काफीमेलोद्भवा तेषां मते भीमपलासिका ॥ १०२ ॥
मतभेदा भवंत्वेते वयं लक्ष्यानुवर्तिनः ।
पूर्याधनाश्रिकामेव सत्कुर्मो रागिणीमिमाम् ॥ १०३ ॥

परजः

पूर्वीमेलोत्थितः प्रोक्तः परजो विबुधप्रियः ।
आरोहे चावरोहेऽपि संपूर्णो लक्ष्यसंगतः ॥ १०४ ॥
उत्तरांगप्रधानत्वात्तारषड्जांशशोभितः ।
गानमभीप्सितं तस्य नक्तं यामेंऽतिमे सदा ॥ १०५ ॥
ग्रंथेषु लक्ष्यते स्पष्टो निर्दिष्टः शुद्धमध्यमः ।
व्यवहारे तु तीव्रोऽपि युज्यते नात्र संशयः ॥ १०६ ॥
अथवा रात्रिगेयेऽस्मिन् स्वरूपे तत्प्रयोजनम् ।
विसंगतं कथं भूयात् नियमो ह्येष तद्विदाम् ॥ १०७ ॥
चपलप्रकृतिश्चायं क्षुद्रगीतसमाश्रयः ।
विलंबितलये गीतो वासंतीमिश्रितो भवेत् ॥ १०८ ॥

लक्ष्याध्वनि दृश्यतेऽसौ कलिंगेन विमिश्रितः ।
मिश्रणं तन्निश्चयेन रक्तिघ्नं नैव सर्वथा ॥ १०९ ॥
पूर्वांगस्य दुर्बलत्वे सायंकालप्रसूचनम् ।
न कर्हिंचिच्छंकनीयं नैसर्गिकं हि कौतुकम् ॥ ११० ॥

वसंतः

पूर्वीमेलसुसंजातो वसंताख्यो बुधैर्मतः ।
संपूर्णस्तारषड्जांशो वसंततौ सुखप्रदः ॥ १११ ॥
मगयोः पुनरावृत्त्या विशिष्टां रक्तिमावहेत् ।
परजस्यापि भिन्नत्वं तत्रैव प्रकटीभवेत् ॥ ११२ ॥
रागेऽस्मिन् गायनैः कैश्चिल्ललितांगं समर्थ्यते ।
येनापि स्यान्मते तेषां रूपस्यास्य प्रभेदनम् ॥ ११३ ॥
ग्रंथेषु कीर्तितो दृष्टो मेले मालवगौडके ।
रात्रिगेयो यतस्तस्मिंस्तीव्रमे न विसंगतिः ॥ ११४ ॥
प्रयोगो धैवतस्यापि तीव्रस्य लक्ष्यते क्वचित् ।
कुत्रचित्पंचमस्त्यक्तो बुधः कुर्याद्यथोचितम् ॥ ११५ ॥
वसंते पंचमो नैव ह्यारोहे रक्तिदो भवेत् ।
परजाख्ये पुनः सोऽपि विशिष्टां रक्तिमावहेत् ॥ ११६ ॥
निषादस्यापि चाधिक्यं परजाह्वे यथा मतम् ।
न तदत्र वसंताख्ये संभवेदिति संमतम् ॥ ११७ ॥

## मारवामेले,

### मारवा.

गमनश्रममेलोऽसौ लक्ष्यगो मारवाभिधः ।
धैवतस्यात्र तीव्रत्वात् पूर्वीमेलभिदा स्फुटा ॥ १ ॥
एतन्मेलसमुत्पन्ना प्रसिद्धा मारवा मता ।
आरोहे चावरोहेऽपि पंचमस्वरवर्जिता ॥ २ ॥
धैवतस्थितवादित्वं दृश्यते बहुसंमतम् ।
न मेऽभीष्टं भवेदेतत् सायंगेयस्वरूपके ॥ ३ ॥
वादित्वे धैवते निष्ठे प्रातर्गेयत्वसूचनम् ।
हिंदोलांगगतं सिद्धं द्वयोः पंचमलंघनात् ॥ ४ ॥
सुसंगतं प्रधानत्वं पूर्वांगे सायमीरितम् ।
ग्रंथगा मारवा प्रोक्ता सांशा गांशाथवा पुनः ॥ ५ ॥
पारिजातोक्तमार्वाह्वः काफीमेलसमुद्भवः ।
वसंतभैरवीजातः सोमनाथेन भाषितः ॥ ६ ॥
सारामृतेऽपि षड्जांशो मारुवः सायमीक्षितः ।
लोकेऽसौ तीव्रमोऽपश्च तीव्रधो नैव संशयः ॥ ७ ॥
व्यवहारे रिवक्रत्वं विशेषेण सुखप्रदम् ।
प्रच्छादनं निषादस्य ह्यनुलोमे गुणिप्रियम् ॥ ८ ॥
अत्र केचिन्निर्दिशंति रोहणे रिधलंघनम् ।
सुप्रतीतं न तल्लक्ष्ये यतो ग्राह्यं न तद्विदाम् ॥ ९ ॥
मारवा पूरिया चेति द्वे सायं पोज्झिते यथा ।
ललिता सोहनी चेति द्वे यामेंऽत्ये पुनर्निशि ॥ १० ॥

### पूरिया.

गमक्रियमेलेऽपि पूरिया बहुसंमता ।
षाडवा पंचमत्यक्ता गांधारांशेन मंडिता ॥ ११ ॥
मंद्रावधिर्लक्ष्यविद्भिर्गांधारोऽत्र नियोजितः ।
मंद्रमध्यस्वरैरेषा नित्यं रक्तिप्रदा भवेत् ॥ १२ ॥
सायंगेया यतः सिद्धा पूर्वांगप्रबला स्वयम् ।
उत्तरांगप्रधानत्वे सोहन्येव न संशयः ॥ १३ ॥

निर्योश्च निमयोश्चापि संगतिः सुभगा पुनः ।
मंद्रनिधनिस्वराणां संहती रागदर्शिनी ॥ १४ ॥
ईषत्कोमलधो लक्ष्ये प्रयुक्तो गायनैः क्वचित् ।
एकश्रुतिच्युतस्तेषां मते धः प्रतिपाद्यते ॥ १५ ॥
यतः शास्त्रे विधानं तत् कुत्रापि न समर्थितम् ।
ग्राह्यत्वं तन्मतस्यापि लोकरुच्यवलंबितम् ॥ १६ ॥
मंद्रन्यादिस्वराभ्यासान्मारवा दूरतां व्रजेत् ।
रिधौ तत्र निगावत्र भवेतां मार्गदर्शकौ ॥ १७ ॥

भावभट्टमते पूरियाभेदाः,

पूर्विकाललितायुक्ता हिंदोलांता तदा भवेत् ।
ललिताभैरवाभ्यां तु भैरवांता प्रकीर्तिता ॥ १८ ॥
ललिताबिहंगडाभ्यां स्यात् पूरियाबिहंगडा ।
युता पूर्याधनाश्रीः सा हिंदोलेन धनाश्रिका ॥ १९ ॥
ललितेमनसंयोगे भवेत्पूर्येमनीरिता ।
सप्तमी शुद्धपूर्या स्यादेवं सप्तविधा स्मृता ॥ २० ॥
विशिष्टलक्षणान्येषां रागाणां नैव चाब्रवीत् ।
ग्रंथकारो यथायोग्यं विचार्यं तद्विचक्षणैः ॥ २१ ॥
प्रवचनं पुनस्तेषां क्लिष्टमेव भवेत् सदा ।
अतस्तेन धृतं मौनं न मे ह्याश्चर्यकारणम् ॥ २२ ॥
रागावयवभूतानामुत्तमांशान् विवृत्य ते ।
मुख्यरागान् पुरस्कृत्य गायंति लक्ष्यवेदिनः ॥ २३ ॥

वराटी.

मारवामेलके प्रोक्ता वराटी बुधसंमता ।
आरोहेऽप्यवरोहे च संपूर्णा परिकीर्तिता ॥ २४ ॥
गांधारोंऽगीकृतो वादी धैवतोऽमात्यसंनिभः ।
सांदोलनं मतं गानं प्रदोषे सुखदं सताम् ॥ २५ ॥
प्राचुर्यान्मारवांगस्य क्वचित्तच्छंकनं भवेत् ।
मारवायां तु पोनत्वमिति तस्याः स्फुटा भिदा ॥ २६ ॥
केचिदुपदिशंत्यत्र कोमलत्वं तु धैवते ।
वादित्वमपि तत्रस्थं न तद्भाति सुसंगतम् ॥ २७ ॥

मृदुत्वं धैवते निष्ठं प्रदोषे नैव बाधितम् ।
वादित्वं तत्स्वरे प्राप्तं रागहानिकरं स्फुटम् ॥ २८ ॥
गपयोः संगतिः केचिन्निर्दिशंति विचक्षणाः ।
न तद्दोषास्पदं भूयाद्दौर्बल्यान्मध्यमस्य च ॥ २९ ॥
पूर्णा सांशा रिग्रहाऽपि पूर्वीमेले प्रकीर्तिता ।
सोमनाथेन सा ग्रंथे रागबोधे परिस्फुटा ॥ ३० ॥
ग्रंथेषु बहवो भेदा वराट्याः परिकीर्तिताः ।
हिंदुस्थानीयपद्धत्यां न ते सर्वे जनप्रियाः ॥ ३१ ॥

वराट्युपभेदाः,

"आद्या शुद्धवराटी स्याद्द्वितीया कौंतली मता ।
तृतीया द्राविडी प्रोक्ता चतुर्थी सैंधवी मता ॥ ३२ ॥
अपस्वरा पंचमी स्यात् षष्ठी हतस्वरा पुनः ।
प्रतापाद्या सप्तमी स्यादष्टमी तोडिकादिका ॥ ३३ ॥
नागवराटी नवमी पुन्नागा दशमी स्मृता ।
एकादशी तु शोकाद्या कल्याणा द्वादशी मता ॥ ३४ ॥
जाने भेदा उपर्युक्ताः प्रचरंति न लक्ष्यके ।
अहोबलेन निर्दिष्टास्ते सर्वे पारिजातके ॥ ३५ ॥
रत्नाकरोक्तरूपाणि वादमूलानि यन्मया ।
निरूपणं कृतं तेषामन्यत्रैव यथामति ॥ ३६ ॥

ललिता.

मारवामेलने गीता रागिणी ललिताऽधुना ।
आरोहे चावरोहेऽपि पंचमेन विवर्जिता ॥ ३७ ॥
विश्लिष्टत्वं मध्यमस्य कस्य नो द्रावयेन्मनः ।
संगतिर्मधयोर्नित्यमपूर्वा रक्तिमावहेत् ॥ ३८ ॥
शुद्धमध्यमवादित्वं सर्वत्र बहुसंमतम् ।
अमात्यत्वं भवेत् षड्जे शास्त्रोक्तनियमागतम् ॥ ३९ ॥
उत्तरांगप्रधानत्वे तारषड्जविचित्रता ।
अत्रापि स्यात् सुप्रसक्ता रजन्यां प्रहरेऽतिमे ॥ ४० ॥
मध्यरात्रिपरं ख्यातं ललितांगं स्वतंत्रकम् ।
पंचमाद्यास्तु रागास्ते तदंगा गुणिसंमताः ॥ ४१ ॥

रागलक्ष्माभिधे ग्रंथे रागोऽयं पंचमोज्झितः ।
भैरवे मेलने प्रोक्तः षड्जन्यासग्रहांशकः ॥ ४२ ॥
कोमलरिधसंयुक्तो तीव्रगन्यन्वितः पुनः ।
रामामात्येन संप्रोक्तः स्वरमेलकलानिधौ ॥ ४३ ॥
तथैवाह रागमेनं चतुर्दंडिप्रकाशिका ।
शुद्धरामक्रियामेले सोमनाथो वदत्यमुम् ॥ ४४ ॥

जेतः ( जयन्तः )

मारवामेलने तत्र रागः स्याज्जेतनामकः ।
आरोहे चावरोहेऽपि मनिवर्जो गुणिप्रियः ॥ ४५ ॥
स्याद्वादी पंचमो ह्यत्र संवादी षड्ज ईरितः ।
गानमस्य समीचीनं भवेत्सायं निरंतरम् ॥ ४६ ॥
रेवायां मनिवर्जत्वं नूनं मया पुरोदितम् ।
तथैवापि विभासे तदिति स्याच्छंकनं क्वचित् ॥ ४७ ॥
वादिभेदे रागभेदः प्रस्फुटः सर्वसंमतः ।
गीतवैचित्र्यमेवैतदिति शंका निरर्थिका ॥ ४८ ॥
तथाप्यत्र समादिष्टं तीव्रमस्य प्रयोजनम् ।
अवरोहे भवेद्येन सौकर्यं रागभेदने ॥ ४९ ॥
मते केषांचिदप्युक्तो जेतः कल्याणमेलजः ।
कोमलत्वं रिस्वरस्य भाति मे युक्तिसंगतम् ॥ ५० ॥
संत्यन्ये ते मते येषां जेतो धैवतवर्जितः ।
पूर्वीमेलेऽपि तद्गानं नियुक्तं तैः सुरक्तिदम् ॥ ५१ ॥
रिवर्जने भवेत्पूर्व्या टंकिकायाः समुद्भवः ।
त इत्याहुरनायासं विचार्य तन्मनीषिभिः ॥ ५२ ॥
रागभेदव्यंजकत्वं यन्मते स्यात्परिस्फुटम् ।
न तस्य ग्रहणे दोषः शास्त्राभावे सतां मते ॥ ५३ ॥

भट्टिहारः

गमनश्रममेलोत्थो भट्टिहारः प्रकीर्तितः ।
संपूर्णो मध्यमांशोऽसौ चरमांगविभूषितः ॥ ५४ ॥
मध्यमोऽत्र भवेन्मुक्तस्तत्रैव न्यसनं प्रियम् ।
विधानं लक्ष्यविज्ञानां भाति मे तत्सुसंगतम् ॥ ५५ ॥

अनुलोमे तीव्रमस्य प्रयोगो रात्रिसूचकः ।
पातो मे धैवतान्नूनं सर्वेषां ह्लादयेन्मनः ॥ ५६ ॥
ललितश्च कलिंगश्च परजोऽपि तृतीयकः ।
अवयवा भवंत्यस्य नैतन्मतं निराश्रयम् ॥ ५७ ॥
उत्तरांगप्रसक्तं स्यात् क्वचिन्माडाख्यरूपकम् ।
रिस्तु तत्र भवेत्तीव्रो ह्यत्राऽसौ कोमलः सदा ॥ ५८ ॥
केचिदाहुरिमं रागं भर्तृहरिविनिर्मितम् ।
अस्तु तत्संमतं लोके रूपमेतद्गुणिप्रियम् ॥ ५९ ॥
गपयोर्मधयोश्चात्र संगतिर्बहुसंमता ।
अनुलोमे निदौर्बल्यं विलोमे वक्रता शुभा ॥ ६० ॥

भंखारः

मारवामेलके प्रोक्तो रागो भंखारनामकः ।
आधुनिकं वदंतीमं केचिल्लक्ष्यविचक्षणाः ॥ ६१ ॥
संपूर्णः पंचमांशः स्यादुत्तरांगप्रधानकः ।
यामे तृतीयके रात्र्यां गानमस्य सुखप्रदम् ॥ ६२ ॥
समावेशान्निमयोश्च विभासो मालवोत्थितः ।
भिन्नत्वमाप्नुयात्स्पष्टमिति तत्र न शंकनम् ॥ ६३ ॥
ईषत्स्पर्शो भवेदिष्टः शुद्धमस्याभिव्यक्तये ।
रागस्यास्य समुद्धारे प्रवदंति मनीषिणः ॥ ६४ ॥
तिरोभावे मुक्तमस्य कथं पुनः समुद्भवेत् ।
तत्स्वरांशयुतो रागो भट्टिहारः सुलक्षणः ॥ ६५ ॥

पंचमः

मारवामेलके जातः पंचमो लोकविश्रुतः ।
संपूर्णो मध्यमांशोऽपि नक्तं यामे ततोंऽतिमे ॥ ६६ ॥
उत्तरांगप्रधानोऽयं द्विमध्यमविभूषितः ।
परजानंतरं गीतो ह्यवश्यं रंजयेन्मनः ॥ ६७ ॥
मुक्तत्वान्मध्यमस्यात्र ललितांगं परिस्फुटम् ।
प्रकृतिर्भट्टिहारस्य धारयेन्नैव संशयः ॥ ६८ ॥

केचिदस्मिन्वर्जयंति रिषभं वाऽथ पंचमम् ।
भवेल्लक्ष्यविरुद्धं तन्न वयं लक्ष्यरोधिनः ॥ ६९ ॥
रिषभस्य वर्जने स्याद्धट्टिहारप्रभेदनम् ।
अनायासं परंत्वत्र बुधः कुर्याद्यथोचितम् ॥ ७० ॥
ललितांगप्रधानोऽन्यो रागो ललितपंचमः ।
धकोमलो मया प्रोक्तो भैरवे मेलने पुरा ॥ ७१ ॥
सोहन्यंगान्वितं केचित् पंचमं पंडिता विदुः ।
परिक्तं शुद्धमत्यक्तं न तन्मे रोचते मतम् ॥ ७२ ॥
सोमनाथमते रागः पंचमो रिषभोज्झितः ।
भैरवे मेलके प्रोक्तः पंचमांशेन भूषितः ॥ ७३ ॥
रात्रिगेयो यतस्तस्मिन् कदाचित्पंडितैः कृतम् ।
तीव्रमेण तथा तीव्रधेनापि परिवर्तनम् ॥ ७४ ॥
पूर्णपंचमकोऽप्यन्यो भैरवे मेलने मतः ।
निषादो वर्जितस्तत्र भवेत्तस्य भिदा स्फुटा ॥ ७५ ॥

सोहनी.

मारवामेलसंजाता सोहनी लक्ष्यसंमता ।
आरोहे चावरोहेऽपि परिक्ता कीर्त्यते सदा ॥ ७६ ॥
उत्तरांगप्रधानत्वे वादित्वं धैवते भवेत् ।
अमात्यसंनिभो गः स्याद्गायनं शेषयामके ॥ ७७ ॥
प्रयोगो दृश्यते शुद्धमध्यमस्य क्वचित् कृतः ।
संगतिर्धगयोर्नित्यं रूपं प्रस्फुटमादिशेत् ॥ ७८ ॥
अंत्ययामप्रगेयत्वात्तारषड्जे विचित्रता ।
संभवेत्तत्र संगीतकेंद्रस्थानं क्रमागतम् ॥ ७९ ॥
मंद्रमध्यस्वरैः पूर्या सोहन्यप्युत्तरैः स्वरैः ।
इति संगीतवैचित्र्यमद्भुतं हृदयंगमम् ॥ ८० ॥
सुप्रसिद्धेषु ग्रंथेषु रागिणीयं न लक्षिता ।
आधुनिका मता तस्माल्लक्ष्यमार्गविचक्षणैः ॥ ८१ ॥
वदंति धैवतं केचित्कोमलमत्र रूपके ।
न मे भाति सुयुक्तं तद्बुधः कुर्यात्स्वनिर्णयम् ॥ ८२ ॥

विभासः

मारवामेलकोत्पन्नो विभासः श्रूयते क्वचित् ।
संपूर्णो गीयते प्रातरंतिमांगप्रधानकः ॥ ८३ ॥
धैवतस्यात्र वादित्वं संवादित्वं तु गस्य तत् ।
गपयोर्मधयोश्चापि संगती रक्तिकारणम् ॥ ८४ ॥
न्यसनं पंचमे नित्यं गांभीर्यं दर्शयेन्महत् ।
विलंबितलये गीते रागेऽस्मिन् विधिसंयुते ॥ ८५ ॥
ग्रंथेषु वर्णितं नूनं रोहणे मनिवर्जनम् ।
गपयोः संगतिः श्रेष्ठा सुग्राह्यं भाति तन्मतम् ॥ ८६ ॥
पूर्वांगे लक्षिता गौरी ह्युत्तरांगे ततः पुनः ।
देशिकारो भवेदेतल्लक्ष्ये कैश्चित्समर्थ्यते ॥ ८७ ॥

मालीगौरा.

मारवामेलजन्योक्ता मालीगौरा मनीषिभिः ।
संपूर्णा रिग्रहांशाऽसौ संध्याकालोचिता सदा ॥ ८८ ॥
पूरियाश्रीमिश्रणेन रूपमेतत्समुद्भवेत् ।
मंद्रमध्यस्वरैरेषा प्रायो लक्ष्ये समीरिता ॥ ८९ ॥
अथ वक्ष्ये लक्ष्यगतमतभेदान्यथायथम् ।
जिज्ञासूनां यतोऽपि स्याद्रागनिर्णयसाधनम् ॥ ९० ॥
केचिदत्र वर्णयंति विवादित्वं तु धैवते ।
येन स्याद्विशदो भेद एतस्या लक्ष्यवर्त्मनि ॥ ९१ ॥
अन्ये पुनः संगिरंति द्विधैवतप्रयोजनम् ।
गौर्यंगेनयुतं गानमाहुस्ते न्यंशकं शुभम् ॥ ९२ ॥
पूरियायां प्रविष्टश्चेत्पंचमो ह्यपरे जगुः ।
अवश्यं तत्र जायेत गौरारूपं न संशयः ॥ ९३ ॥

साजगिरी.

मारवामेलने ख्याता साजगिरी जनप्रिया ।
आधुनिका मता तज्ज्ञैः संपूर्णा गांशमंडिता ॥ ९४ ॥
धैवतद्वंद्वमत्राहुः संगतिर्निमयोः शुभा ।
गानं गुणिसमादिष्टं सायंकालेऽतिशोभनम् ॥ ९५ ॥

ईषत्स्पर्शः शुद्धमस्य नैव स्याद्रक्तिघातकः ।
पूर्यायाः पूर्विकायाश्च तेन स्यात्प्रस्फुटा भिदा ॥ ९६ ॥
पूरियांगभूषितेयं रागिणी यत्सुसंमता ।
मंद्रमध्यस्वरैर्गानमवश्यं सुखमावहेत् ॥ ९७ ॥
पूर्वीपूर्यामिश्रणेन साजगिर्या जनिः स्मृता ।
रूपमेतन्मतं प्रायो विरलं लक्ष्यवर्त्मनि ॥ ९८ ॥
केषांचित्तु मते तत्र तीव्रधो नैव संमतः ।
रिवर्जनमपि प्राहुस्ते तन्नास्तीह लक्ष्यके ॥ ९९ ॥

टिप्पनी.

एवं च मारवामेले रागा द्वादश लक्षिताः ।
सायंगेया भवेयुः षट् प्रातर्गेयाः षडीरिताः ॥ १०० ॥
पूरिया मारवा जेता गौरा साजगिरी तथा ।
वराटीसहिता रागाः सायंगेया बुधैर्मताः ॥ १०१ ॥
ललितश्च पंचमश्च भट्टियारो विभांशुकः ।
भंखारः सोहनी चेति रागाः प्रातर्मता बुधैः ॥ २ ॥
गौर्यंगाः पूरियांगाश्च सायंगेया व्यवस्थिताः ।
ललितांगास्तथा चोक्ताः सोहन्यंगाः प्रभातगाः ॥ ३ ॥
सायंगेयेषु पूर्वांगं प्रबलं गुणिसंमतम् ।
प्रातर्गेयेषु प्राबल्यं ह्युत्तरांगस्य निश्चितम् ॥ ४ ॥
स्थूलदृष्ट्या मता एते नियमा मार्गदर्शकाः ।
विशेषास्तु तत्र तत्र द्रष्टव्या मर्मवेदिभिः ॥ ५ ॥

मतांतरे सायंगेयरागनिर्णयसुलभोपायः,

संपूर्णा पूर्विका ख्याता रिवर्जा तत्र टंकिका ।
श्रीरागे लंघनं गस्य त्रिवणा मस्वरोज्झिता ॥ ६ ॥
अपंचमा भवेद्गौरी धैवतत्यक्तजेतकः ।
मालवी लक्षिता तज्ज्ञैर्निहीना प्रहरेऽतिमे ॥ ७ ॥
नियमा मुख्यतस्त्वेते संगता रोहणे सदा ।
भवेयुर्नव्यशिक्षार्थिवर्गस्याप्युपकारिणः ॥ ८ ॥

## काफीमेले,

### काफी.

हरप्रियाख्यमेलोऽसौ लक्ष्ये काफीति संज्ञितः ।
काफीरागस्तदुत्थः स्यादिति लक्ष्यविदां मतम् ॥ १ ॥
पंचमोऽत्र मतो वादी संवादी षड्जनामकः ।
केचिद्गांधारमाहुस्ते वादिनं गानकोविदाः ॥ २ ॥
मध्यरात्र्युचितो मेलो यथाऽयं गनिकोमलः ।
मध्याह्नार्हस्तथैवेति को न जानाति मर्मवित् ॥ ३ ॥
दरबारादिकान्नक्तं गीत्वा धैवतकोमलान् ।
तीव्रधैवतसंयुक्तान् गायंति गायकाः क्रमात् ॥ ४ ॥
आसावर्यादिकान् गीत्वा दिवसे तान् धकोमलान् ।
लोके सारंगधनाश्रीप्रमुखान् क्रमशो जगुः ॥ ५ ॥
अपवादा भवेयुस्ते संति वा लक्ष्यवर्त्मनि ।
साधारणो मया प्रोक्तो नियमस्तत्ववेदिनाम् ॥ ६ ॥
काफीमेले यतो दृष्टमारोहे चावरोहणे ।
सरलत्वं ततोऽसौ स्यात्तन्मेलोत्थसमाश्रयः ॥ ७ ॥
काफीत्याधुनिकं नाम यावनिकं परिस्फुटम् ।
अंगीकृतं यतः शास्त्रे नैवास्माभिरुपेक्षितम् ॥ ८ ॥
केचिदाहुरिमं मेलं श्रीरागाख्यं मनीषिणः ।
ग्रंथेषु लभ्यते यस्माद्रागोऽसौ तत्र लक्षितः ॥ ९ ॥
दाक्षिणात्यमतेऽद्यापि काफीमेलसमुद्भवः ।
श्रीरागो गीयते लोके स्मरणीयं सदैव तत् ॥ १० ॥
हिंदुस्थानीयपद्धत्यां स रागः पूर्विकागतः ।
इति मया समाख्यातं पूर्वमेव सविस्तरम् ॥ ११ ॥
न्यासः पंचमके काफ्यां केवलं रागवाचकः ।
श्रोतारोऽपि सुखं तत्र कुर्वंति रागनिर्णयम् ॥ १२ ॥
आरोहणे भवेत् क्षम्यः प्रयोगस्तीव्रनेर्मनाक् ।
काफीमेलोत्थरागेषु गानसौकर्यहेतवे ॥ १३ ॥
क्षुद्रगीतार्हता काफ्याः सर्वत्र संमता भवेत् ।
शृंगाररसभूयिष्ठां केचित्तां पंडिता विदुः ॥ १४ ॥

धानी.

हरप्रियाह्वमेलाच्च रागिणी बहुसंमता ।
धानीसंज्ञा सुबोधाऽसौ सुरसा सार्वकालिका ॥ १५ ॥
आरोहे चावरोहेऽपि रिधयोरेव वर्जनम् ।
गांधारो नियतो वादी निषादोऽमात्यसंनिभः ॥ १६ ॥
औडवधन्नासिकेयं वर्णिता पारिजातके ।
शुद्धधन्नासिकेत्याहुः केचिदन्ये विपश्चितः ॥ १७ ॥
धनाश्रीभेदसिद्ध्यर्थं कदाचिल्लक्ष्यकोविदैः ।
अंगीकारः कृतो धानीनाम्नो नैतद्विसंगतम् ॥ १८ ॥
वादमूले तथाप्यत्र विषये तत्वदर्शिभिः ।
लक्ष्यगतमनुल्लंघ्य कार्यं नित्यं प्रवर्तनम् ॥ १९ ॥
समपानां दुर्बलत्वे ह्यभावे रिधयोरपि ।
कुतो गांभीर्यसंप्राप्तिर्भवेन्नैव सतां मते ॥ २० ॥

सैंधवी.

काफीमेलसमुत्पन्ना सैंधवी कीर्त्यते जने ।
आरोहणे गनित्यक्ता संपूर्णाप्यवरोहणे ॥ २१ ॥
सपयोरेव संवादः कैश्चित्तुरिधयोर्मतः ।
गानं गुणिसमादिष्टं कथ्यते सार्वकालिकम् ॥ २२ ॥
मतैक्यं नैव लक्ष्ये यन्निषादपरिवर्जने ।
प्रयोगस्तत्स्वरस्येह क्षम्यते रोहणे मनाक् ॥ २३ ॥
अगनिः सैंधवी प्रोक्ता सोमनाथेन सूरिणा ।
विलोमे पूर्णता तस्या अहोबलसुसंमता ॥ २४ ॥
प्रत्यक्षे गायनाः प्रायः काफीमिश्रितरूपकम् ।
सदैवास्या दर्शयंति लोकरंजनवांछिनः ॥ २५ ॥
सिंधोडानामिकासैव सैंधवीति प्रकीर्तितम् ।
सुव्यक्तं रागबोधे तद्विचार्यं तत्वशोधकैः ॥ २६ ॥
यद्यप्यासावरी प्रोक्ता गनिवर्जा पुरामया ।
भेदमर्हेदसौ यस्मात्तत्र धः कोमलो मतः ॥ २७ ॥
अत्रोक्तदशमेलेषु निगयोः परिवर्जनात् ।
आरोहे भिन्नरागाणामुत्पत्तिः संभवेत्स्फुटा ॥ २८ ॥

धनाश्रीः (द्वितीया).

काफीमेलसमुद्भूता धनाश्रीः कथिता पुनः ।
आरोहे रिधहीनाऽसौ संपूर्णा प्रतिलोमके ॥ २९ ॥
पंचमः संमतो वादी मंत्री षड्जः समीरितः ।
लक्ष्याध्वनि मतं गानं तृतीयप्रहरे दिने ॥ ३० ॥
ग्रहः प्रायो निषादेन भवेन्न्यासस्तु पंचमे ।
पगयोः संगतिर्मिष्टा विलोमे विबुधैर्मता ॥ ३१ ॥
मध्यमस्यैव वादित्वे लसेद्भीमपलासिका ।
आरोहणे रिधत्यक्ता मध्यमांशसमन्विता ॥ ३२ ॥
तृतीययामगेयेषु प्रायो रागेषु दृश्यते ।
दौर्बल्यं स्वरयोर्धन्योरारोहे तद्विदो विदुः ॥ ३३ ॥
दुर्बलत्वात्तयोरेव समपाः प्रभवंति ते ।
पवादित्वे धनाश्रीः स्यान्मवादित्वे पलाशिका ॥ ३४ ॥
काफीमेले रिधत्यक्तमारोहेऽहोबलस्तथा ।
रागमेनं यथान्यायमादिदेश जनप्रियम् ॥ ३५ ॥
व्यक्ता सारामृते ग्रंथे धनाश्र्याख्या सदौडवा ।
प्रातर्गेया रिधत्यक्ता काफीमेले प्रकीर्तिता ॥ ३६ ॥
केचिन्मर्मविदः प्राहुः पूर्वीमेले रिधोज्झितम् ।
रागमेनं विलोमे तत् स्मरणार्हं मतं पुनः ॥ ३७ ॥
नित्यं पमुद्रिता प्रोक्ता रिधोना सांशिका तथा ।
धनाश्री धवलाद्यासौ सोमनाथेन सूरिणा ॥ ३८ ॥

भीमपलासी.

काफीमेलसुसंजाता मता भीमपलासिका ।
आरोहे रिधहीनं स्यादवरोहे समग्रकम् ॥ ३९ ॥
मध्यमांशग्रहन्यासा मुक्तमध्यममंडिता ।
अपराह्णे समीचीनं गानमस्याः सुनिश्चितम् ॥ ४० ॥
मध्यमस्यैव वादित्वाद्धनाश्रीर्नैव संभवेत् ।
प्रतिलोमे यतः पूर्णा धानी शंका कुतो भवेत् ॥ ४१ ॥
एकैकश्रुत्यपकृष्टौ क्वचिद्रिधौ समीरितौ ।
अन्ये रिवर्जनं प्राहुः समूलं रागभेदकम् ॥ ४२ ॥

संमतं श्रुतिभिन्नत्वे रक्तिभिन्नत्वमंजसा ।
मते मे वादिभिन्नत्वं पर्याप्तं लक्ष्म भेदकम् ॥ ४३ ॥
ग्रंथेषु रागभेदास्ते श्रुत्यायत्ता न लक्षिताः ।
न चावश्यं तद्विधानं रागभेदोपलब्धये ॥ ४४ ॥
दाक्षिणात्यमते प्रोक्ता धनाश्री रिधकोमला ।
मयोक्ताऽसौ विस्तरेण भैरवीमेलने पुरा ॥ ४५ ॥
धानी धनाश्रिका चैव मूलतानी पलासिका ।
प्रदीपकी मता एता रागिण्या रिधदुर्बलाः ॥ ४६ ॥

हंसकंकणी.

कर्णाटस्यैव मेले सा रागिणी हंसकंकणी ।
लक्ष्याध्वनि बुधैर्गीता तृतीयप्रहरोचिता ॥ ४७ ॥
रिधहीना मता रोहे संपूर्णा च विलोमके ।
धनाश्र्यंगप्रगीताऽसौ सर्वरक्तिप्रदायिका ॥ ४८ ॥
गांधारद्वययोगोऽत्र कौशल्येन सुसाधितः ।
रोहणे तीव्रगः स्पृष्टो विलोमे कोमलाह्वयः ॥ ४९ ॥
तृतीयप्रहरोक्तानां रागाणां प्रकृतिर्मता ।
संततं रिधदौर्बल्यं महत्वं समपेषु तत् ॥ ५० ॥
शंकराभरणाख्यस्य कर्णाटाभिधमेलके ।
मिश्रणादिदमुद्भूतं स्वरूपमिति कथ्यते ॥ ५१ ॥
पंचमस्यैव वादित्वं योग्यमत्रेति मे मतम् ।
धनाश्र्यंगप्रधानत्वं यावल्लोकप्रियं भवेत् ॥ ५२ ॥
अप्रसिद्धं रूपमेतद्विचित्रमविशंकितम् ।
गीयते लक्ष्यमार्गेऽपि केवलं गायकोत्तमैः ॥ ५३ ॥

पटमंजरी.

हरप्रियाह्वये मेले मंजरी पटपूर्विका ।
रागिणी श्रूयते गीता विरला गुणिसंमता ॥ ५४ ॥
आरोहे धगदौर्बल्यं भवेत्सारंगसंनिभम् ।
सारंगे लंघनं प्रोक्तं समूलं स्वरयोस्तयोः ॥ ५५ ॥

वादित्वं षड्जके निष्ठं संवादित्वं तु पंचमे ।
सारंगानंतरं गानं भवेदस्याः सुसंमतम् ॥ ५६ ॥
दुर्लभं रूपमेतद्यदवश्यं संभवेत् ततः ।
लक्ष्याध्वनि मतानैक्यं बुधः कुर्याद्यथोचितम् ॥ ५७ ॥
मते केषांचिदप्यत्र द्विगांधारप्रयोजनम् ।
पंचमस्यैव वादित्वं न तन्मे भाति संगतम् ॥ ५८ ॥
मेले शुद्धस्वराणां तां केचिदन्ये विदो विदुः ।
लक्ष्यदृष्ट्या न मे भाति तन्मतं चापि संगतम् ॥ ५९ ॥
शुद्धस्वरगतं रूपं रात्रिगतं भवेत्प्रियम् ।
मया प्रपंचितं भूयात्तृतीयप्रहरे दिने ॥ ६० ॥

प्रदीपकी.

स्यात्काफीमेलसंजाता प्रदीपकी सुसंमता ।
आरोहे रिधहीनं स्यादवरोहे समग्रकम् ॥ ६१ ॥
मंजरीं रागिणीं गीत्वा यदैषारभ्यते पुनः ।
किंचिदवर्णनीयं तद्वैचित्र्यं चानुभूयते ॥ ६२ ॥
मंद्रमध्यस्वरैः सैव पलाशिकां प्रसूचयेत् ।
मांशिकाऽसौ सदैवेयं सांशिकेति भिदा स्फुटा ॥ ६३ ॥
यद्यप्यत्रावरोहे नो रिषभो वर्जितस्वरः ।
असत्प्रायस्तु लक्ष्येऽसौ धनाश्र्यां तद्विरुध्यते ॥ ६४ ॥
ईषन्मृदू समादिष्टौ कैश्चिदत्र रिधौ स्वरौ ।
एतन्मर्मपरिज्ञानं केवलं विदुषां भवेत् ॥ ६५ ॥
क्वचिल्लक्ष्येऽनुलोमे स्यात्तीव्रगस्य युजेक्षिता ।
विश्लिष्टो मो भवेत्तत्र कंकणीभेददर्शकः ॥ ६६ ॥

बाहारः

हरप्रियाख्यमेलाच्च जातो रागः सुसंमतः ।
आधुनिको बहाराख्यश्चंचलप्रकृतिः सदा ॥ ६७ ॥
समयोरेव संवादः स्वीकृतोऽत्र विचक्षणैः ।
वसंततौ मतं गानं संगत्या मधयोर्भृशम् ॥ ६८ ॥

आरोहणे रिहीनत्वं प्रतिलोमे धलोपनम् ।
इति मर्मविदामेतन्मतं भाति सुसंगतम् ॥ ६९ ॥
आरोहे मधसंगत्या वागीश्वर्यंगमाश्रयेत् ।
अवरोहे धलुप्तत्वादडाणांगं प्रदर्शयेत् ॥ ७० ॥
अडाणाख्ये तु ये केचित्संति धैवतवादिनः ।
कोमलत्वं तथाल्पत्वं तत्स्वरे संगिरंति ते ॥ ७१ ॥
समागमो बहारस्य नानारूपेषु युज्यते ।
यथासंज्ञं बुधः कुर्यात्तत्र लक्ष्यस्य निर्णयम् ॥ ७२ ॥

### नीलांबरी.

काफीमेलोद्भवा ख्याता नीलांबरी गुणिप्रिया ।
संपूर्णा पंचमांशाऽसौ चपलप्रकृतिः पुनः ॥ ७३ ॥
सपयोः संगतिः प्रोक्ता गांधारे कंपनं मतम् ।
धैवतोनाऽनुलोमे स्यादिति तज्ज्ञा वदंति ते ॥ ७४ ॥
तीव्रगस्य समादिष्टः प्रयोगो रोहणे क्वचित् ।
सपाटवं निविष्टोऽसौ न रक्तिघ्नोऽपि मे मते ॥ ७५ ॥
मध्यमादिस्तथा भीमपलासी ह्यत्र मिश्रिते ।
इति यन्मन्यते लोके तन्न भाति विसंगतम् ॥ ७६ ॥
ग्रंथेषु केषुचित्प्रोक्ता कांबोजीमेलनोद्भवा ।
लभ्यते न यतो लक्ष्ये तद्रूपं भाति बाधितम् ॥ ७७ ॥

### पीलुः

काफीमेले संप्रयुक्तः पीलुरागस्ततः पुनः ।
आधुनिको भवेल्लक्ष्ये यावनिकोऽपि निश्चितम् ॥ ७८ ॥
संपूर्णो गांशकः प्रोक्तो मिश्रमेलसमुत्थितः ।
गानं तस्य समीचीनं सुप्रियं सार्वकालिकम् ॥ ७९ ॥
तीव्राश्च कोमलाः सर्वे स्वरा रूपेऽत्र योजिताः ।
संकीर्णं रूपमित्येवं सर्वेषां सुखदायकम् ॥ ८० ॥
गौरी भीमपलासी च भैरव्यपि तृतीयका ।
गायनेऽस्य मिलंत्येते यथायोगं सतां मते ॥ ८१ ॥

आरोहे तीव्रसंज्ञानां स्वराणां स्यात्प्रयोजनम् ।
विलोमे कोमलानां तन्नियम इति भाति मे ॥ ८२ ॥
क्षुद्रगीताहताप्यस्य लक्ष्याध्वनि बुधैर्मता ।
झटित्येव समाकर्षेत् श्रोतृगणस्य मानसम् ॥ ८३ ॥

भावभट्टविरचिते संगीतानूपांकुशे ग्रंथे,

कर्णाटभेदाः

शुद्धकर्णाटरागश्च कर्णाटो नायकी ततः ।
वागीश्वर्यादिकर्णाटः कर्णाटोऽड्डाणपूर्वकः ॥ ८४ ॥
ततः साहानाकर्णाटः पूर्यादिकस्तथैव च ।
ततो मुद्रिककर्णाटो गाराकर्णाटकस्ततः ॥ ८५ ॥
हुसेनीपूर्वकर्णाटः काफीकर्णाटकः पुनः ।
सोरटीपूर्वकश्चैव खंबावत्यादिकस्ततः ॥
ततः कर्णाटगौडः स्यात् कर्णाटीति चतुर्दश ॥ ८६ ॥

वागीश्वरी.

हरप्रियाख्यमेलाच्च वागीश्वरी मता बुधैः ।
आरोहणे पहीनं स्यात् प्रतिलोमे समग्रकम् ॥ ८७ ॥
मध्यमो निश्चितो वादी संवादी षड्ज ईरितः ।
अल्पत्वं पंचमे प्रोक्तं विलोमे तद्विदां मते ॥ ८८ ॥
लंघनं पंचमस्यैव कैश्चिल्लक्ष्ये समर्थितम् ।
संयोगतो यतस्तस्य धनाश्च्यंगस्य संभवः ॥ ८९ ॥
त्यक्ते तु पंचमे सद्यो ग्रंथोक्ता रागिणी भवेत् ।
पवर्जिता मध्यमांशा श्रीरंजनीतिनामिका ॥ ९० ॥
दाक्षिणात्यमते त्वेषा रीतिगौडाव्हया स्वयम् ।
वागीश्वरी मते तेषां मुखारीमेलसंभवा ॥ ९१ ॥
ग्रंथेषु केषुचिद् दृष्टा वागीश्वरी द्विगा पुनः ।
अनुलोमे गतीव्रैव प्रतिलोमे गकोमला ॥ ९२ ॥
अद्यापि निपुणा लक्ष्ये तीव्रगस्य लवं क्वचित् ।
प्रच्छन्नं दर्शयंतस्ते लक्षिता नैव संशयः ॥ ९३ ॥

धनाश्रीकानडायोगाद्वागीश्वरी सुकीर्तिता ।
रागतरंगिणीग्रंथे लक्ष्ये तद्भाति संगतम् ॥ ९४ ॥

टिप्पनी.

बहुषु कानडाख्येषु भेदेषु तेषु निश्चितम् ।
मतानैक्यं सदा दृष्टं वितंडामूलकं भृशम् ॥ ९५ ॥
प्रायो धगौ स्वरावेव सर्वत्र वादकारणम् ।
केवलं लक्ष्यमादृत्य भवेत्तत्र प्रवर्तनम् ॥ ९६ ॥
निरक्षरा गायकास्ते रागव्याख्यानिरूपणे ।
अवश्यमेव नो शक्ताः सर्वसंभ्रमकारकाः ॥ ९७ ॥
त्रिष्वंगेषु विभक्तास्ते रागाः काफीसमुद्भवाः ।
स्थूलदृष्ट्या विभागास्ते भवेयुर्युक्तिसंगताः ॥ ९८ ॥
काफ्यंगं प्रथमं तत्र कानडांगं द्वितीयकं ।
सारंगांगं तृतीयं स्यादिति मतिमतां मतम् ॥ ९९ ॥
काफी धानी सैंधवी च धनाश्रीश्च पलासिका ।
पिल्वाख्याद्या मतास्तज्ज्ञै रागाः काफ्यंगमंडिताः ॥ १०० ॥
अडाणः साहना सूहा सुघ्रायी स्याद्धुसेनिका ।
सारंगस्योपभेदाश्च सारंगांगविभूषिताः ॥ १ ॥
कानडांगा मताः केचिन्मल्लारस्योपभेदकाः ।
सारंगांगाः केचिदन्ये ये तदंगेन शोभिताः ॥ २ ॥

अड्डाणः

काफीमेलसमुद्भूतो रागोऽड्डाणो मतः पुनः ।
तारषड्ज़ांशकन्यासो मध्यरात्र्युचितस्तथा ॥ ३ ॥
कर्णाटस्य विशेषोऽयं प्रायो लक्ष्ये समीरितः ।
तारस्थानविचित्रः सन्नूनं रक्तिप्रदो नृणाम् ॥ ४ ॥
दौर्बल्ये धगयोरत्र सारंगे भ्रान्तिरुद्भवेत् ।
गांधारस्य समावेशे तदंगं दूरतां व्रजेत् ॥ ५ ॥
व्यस्तत्वं मध्यमे निष्ठं भवेत्सूहाप्रदर्शकम् ।
तत्र कर्णाटपूर्वांगं सुव्यक्तं नात्र तत्पुनः ॥ ६ ॥

गाधारस्य समायोगे सूरदास्यप्यसंभवा ।
न सारंगो न कोऽप्यन्य एतल्लक्षणलक्षितः ॥ ७ ॥
मेघश्च मध्यमादिश्च रूपकेऽस्मिन्नियोजितौ ।
इति केचित्तर्कयंति लक्ष्यलक्षणकोविदाः ॥ ८ ॥
हुसेनीसंनिभं रूपमेतद्भाति यतो जने ।
अडाणे स्यान्मतं कैश्चित्कोमलत्वं नु धैवते ॥ ९ ॥

साहाना.

हरप्रियाह्वमेलाच्च साहानोत्पत्तिरीरिता ।
आधुनिकं रूपमेतत्पांशकं गुणिसंमतम् ॥ ११० ॥
रात्रिगेया रागिणीयं मन्यते लक्ष्यवर्त्मनि ।
अडाणाख्यस्य सामीप्यमप्यस्या बहुसंमतम् ॥ ११ ॥
धैवतस्य प्रयोगोऽत्र विलोमे क्षम्यते मनाक् ।
तेन व्यक्ता भवेत्तस्या अडाणाख्यात्पुनर्भिदा ॥ १२ ॥
उपस्थित्या गस्वरस्य कथं सारंगसंभवः ।
आरोहणे त्यक्तधेन काफ्यादिका निवारिताः ॥ १३ ॥
प्रतिरूपं दिवा तस्याः सुघ्राईनामिका भवेत् ।
गीतवैचित्र्यमेवैतद्विदग्धप्रतिपादितम् ॥ १४ ॥
कानडायाः प्रभेदोऽयमंगीकृतो यतो बुधैः ।
प्रयोगो गधयोश्चापि नैवोद्वेगकरो भवेत् ॥ १५ ॥
दरबारमेघयोश्च संमिश्रणादियं भवेत् ।
उद्भूता रागिणीत्याहुः केचिद्गानविशारदाः ॥ १६ ॥

हुसेनी.

काफीमेले मता तज्ज्ञैर्हुसेनी रागिणी स्वयम् ।
साक्षाद्यावनिकं रूपं प्रसिद्धं लक्ष्यवर्त्मनि ॥ १७ ॥
उत्थानं स्यान्मध्यमेन यथाड्डाणे पुरोदितं ।
प्राचुर्यात्कानडांगस्य ह्यडाणाद्भेदमर्हयेत् ॥ १८ ॥
अडाणो मेघरागश्च हुसेनी साहना सुहा ।
सुघ्रायीसूरमल्लारौ सारंगांगा इमे मताः ॥ १९ ॥

तारषड्जस्य वैचित्र्यं बहुष्वेतेषु लक्षितम् ।
प्रामाण्यं गधयोर्युक्तं केवलं भेददर्शकम् ॥ १२० ॥
ग्रंथे सारामृते पूर्णा हुसेनी सायमीरिता ।
काफीमेले प्रगेया तद्विचार्यं सुविचक्षणैः ॥ २१ ॥
तुरुष्काद्या मता तोडी हुसेनी सोमसूरिणा ।
भैरवी मेलजा पूर्णा संगवे गांशमंडिता ॥ २२ ॥
काफीमेलोत्थिता ज्ञेया हुसेनीकानडा स्वयम् ।
हुसेनीतोडिकाप्येकस्तोडीभेद इति स्फुटम् ॥ २३ ॥
हुसेनीकानडा ख्याता रात्रिगेया सदा बुधैः ।
हुसेनीतोडिकाप्युक्ता प्रातर्गेया सुनिश्चितम् ॥ २४ ॥
रागलक्ष्माभिधे ग्रंथे हुसेनी कीर्तिता पुनः ।
आरोहणे सुसंपूर्णाप्यवरोहे निवर्जिता ॥ २५ ॥

### नायकीकानडः

काफीमेलसमुत्पन्नो नायकीकानडो मतः ।
षाडवो धैवतत्यक्तो लक्ष्याध्वनि समीक्षितः ॥ २६ ॥
पूर्वांगे स्यात्सुहायोगः सारंगस्योत्तरांगके ।
मध्यमो निश्चितो वादी षड्जोऽमात्यनिभः स्वयम् ॥ २७ ॥
देवशाखस्तथा सूहा कौशिको नायकी ततः ।
सारंगांगा यतो ग्राह्या अवश्यं गाल्पका उत ॥ २८ ॥
धकोमलं सुसंपूर्णं वक्ररूपं तथैव च ।
अप्येनं निर्दिशंत्येके न तल्लक्ष्येऽत्र युज्यते ॥ २९ ॥
वागीश्वरी तथा कौंसी मिलितेऽस्मिन्यथोचितम् ।
इति केचिन्निर्णयंति गीतशास्त्रविशारदाः ॥ १३० ॥

### कौशिककानडः

हरप्रियाख्यमेले स्यात् कर्णाटः कौशिकाभिधः ।
संपूर्णो मध्यमांशश्च मुक्तमध्यममंडितः ॥ ३१ ॥
रागस्यास्यापरं रूपं पूर्वमेव मयोदितम् ।
इति तत्कथनं चात्र केवलं स्यान्निरर्थकम् ॥ ३२ ॥
संगतिर्मधयोः प्रायो विचित्रा रागदर्शिनी ।
तत्रैव स्यान्निश्चयेन मल्लार्यंगनिवारणम् ॥ ३३ ॥

कानडाया विशेषोऽयं यतः सर्वसुसंमतः ।
तदंगतो भवेद्गानं नूनं नैव विसंगतम् ॥ ३४ ॥

सुहा.

मेलात्कर्णाटिकाख्याच्च सुहोत्पत्तिः प्रकीर्तिता ।
आरोहे चावरोहेऽपि धैवतो वर्जितस्वरः ॥ ३५ ॥
मध्यमः संमतो वादी संवादी षड्जनामकः ।
गानं समीरितं लोके द्वितीयप्रहरे दिने ॥ ३६ ॥
यद्यप्युत्तरभागे स्याद्रूपं सारंगसंनिभम् ।
पूर्वांगे व्यक्तगांधारः कुर्यात्तस्य निवारणम् ॥ ३७ ॥
विश्लिष्टत्वं मध्यमस्य नूनं स्याद्रक्तिदायकम् ।
निपयोः संगतिर्न्यासः समीचीनो हि मस्वरे ॥ ३८ ॥
दरबारमेघयोश्च मिश्रणादियमुद्भवेत् ।
वदंति पंडिताः केचिल्लक्ष्यलक्षणकोविदाः ॥ ३९ ॥
यथाड्डाणो मतो रात्र्यां तथैवैषा मता दिवा ।
अत्र सारंगपूर्वांगं तत्र चांत्यं सुलक्षितम् ॥ १४० ॥
सारंगस्य प्रकारेषु भवेद्गस्य विवर्जनम् ।
न तत्कर्णाटभेदेषु ततस्तद्भित्परिस्फुटा ॥ ४१ ॥

सुघरायी ( सुघराई )

हरप्रियाख्यमेले च सुघरायीसमाह्वया ।
आरोहे धैवतोनाऽसौ द्वितीयप्रहरे दिने ॥ ४२ ॥
स्यातां संवादिनावत्र स्वरौ सपौ सतां मते ।
कर्णाटस्यैव भेदोऽयं सारंगांगविभूषितः ॥ ४३ ॥
साहाना रात्रिगेयोक्ता गेयैषा नित्यशो दिवा ।
यथाऽड्डाणो मतो रात्र्यां दिनगेया पुनः सुहा ॥ ४४ ॥
वागीश्वरीमध्यमादिमेलनेऽस्या भवेज्जनुः ।
इति केचिद्वदंतीह लक्ष्यलक्षणकोविदाः ॥ ४५ ॥
अड्डाणः कानडश्चापि वृंदावनस्तथैव च ।
मिलंत्यत्र यथान्यायमपरेषां मतं त्विदम् ॥ ४६ ॥
प्राचीनं रूपमप्येतदवश्यं रक्तिदायकम् ।
तरंगिण्यादिषु व्यक्तं दृश्यते लक्षणान्वितम् ॥ ४७ ॥

सूहायां धैवताभावो वृंदावने न गस्वरः ।
तारषड्जविचित्रः सन्नडाणोऽपि धकोमलः ॥ ४८ ॥

देशाख्यः ( देवशाखः )

हरप्रियाख्यमेलाच्च जातस्तत्र सुनामकः ।
देशाख्य इति विख्यातो रागः सर्वजनप्रियः ॥ ४९ ॥
समयोरेव संवादो दौर्बल्यं धगयोस्तथा ।
कानडामेघसंयुक्तं स्वरूपं बुधसंमतम् ॥ १५० ॥
धैवतस्य परित्यागं केचिदाहुः समूलकम् ।
प्रच्छादनं तत्स्वरस्य विशिष्टरक्तिदायकम् ॥ ५१ ॥
आंदोलनं गस्वरे स्याद्न्यासो मे रुचिरः पुनः ।
कारयेत्सर्वश्रोतॄणां सूहायाः शंकनं स्वयम् ॥ ५२ ॥
देवशाख इति ख्यातो गीयते लक्ष्यवर्त्मनि ।
प्रातःकाले सदा प्रज्ञैः सारंगांगेन मंडितः ॥ ५३ ॥
ग्रंथे सारामृते तत्र द्विगांधारप्रयोजनम् ।
तथा रिवर्जनं शिष्टं न तल्लक्ष्येत्र संमतम् ॥ ५४ ॥

टिप्पनी.

सर्वेष्वेतेषु रूपेषु मपयोः परिवर्जनम् ।
न चानुमोदितं नैव स्मरणार्हमिदं सदा ॥ ५५ ॥
निपयोः संगतिः प्रायः सर्वगतोत्तरांगके ।
तथैव मगयोः प्रोक्ता यत्र शक्या तु पूर्वके ॥ ५६ ॥
गौणत्वं धैवते दृष्टं रात्रिगेयेषु मुख्यशः ।
गांधारांदोलनं नित्यं विलोमे मरिसंगतिः ॥ ५७ ॥
अडाणः स्महना नक्तं हुसेनी नायकी यदि ।
सुहा सुघ्रायिका कौंसी देवशाखस्तथा दिवा ॥ ५८ ॥
यथोचितप्रमाणेन धगयोस्तत्र निर्णयः ।
इति तत्वं सुप्रसिद्धं स्मरणीयमहर्निशम् ॥ ५९ ॥
गरिसेति समासेन प्रत्यक्षः कानरो भवेत् ।
तन्निवृत्त्यर्थमाहुस्ते गमरिसेति संगतिः ॥ १६० ॥

मेघमल्लारः

हरप्रियाख्यमेलाच्च मेघमल्लारनामकः ।
सुधीभिर्निश्चितो नित्यं षाडवः सांशकः पुनः ॥ ६१ ॥
आरोहे चावरोहे स्याद्गांधारस्य सुगोपनम् ।
आन्दोलनं समादिष्टं रिषभे रक्तिदायकम् ॥ ६२ ॥
केचिदुपदिशंत्यत्र धगयोः परिवर्जनम् ।
येन स्यात्प्रकटं सद्यः सूरदासीप्रभेदनम् ॥ ६३ ॥
सूरदासी प्रेयसी यत् सारंगांगा विशेषतः ।
सुयुक्तं मे मते नूनं तत्रैव धगलंघनम् ॥ ६४ ॥
प्रसिद्धो धगवर्जोऽपि रागो लक्ष्ये न संशयः ।
तत्रैषद्धस्य योगेन सूरदासी विभिद्यते ॥ ६५ ॥
मध्यमादृषभे पातो मेघे स्याद्रागवाचकः ।
अवश्यं शिक्षणीयोऽसौ नव्यशिक्षार्थिभिः सदा ॥ ६६ ॥
गंभीरप्रकृती रागो बिलंवितलयोद्धृतः ।
उत्तालस्वरसंगीतो वर्षासु जनयेत्सुखम् ॥ ६७ ॥

सूरमल्लारः

काफीमेलसमुत्पन्नः सूरमल्लारनामकः ।
निर्मितः सूरदासेनेत्याहुर्लक्ष्यविदो जनाः ॥ ६८ ॥
आरोहे चावरोहेऽपि धगयोर्गोपनं मतम् ।
समयोरेव संवादः व्यस्तत्वं मध्यमस्य तत् ॥ ६९ ॥
दौर्बल्याद्धगयोर्नूनं सारंगांगस्य संभवः ।
अतः स्पर्शो मतो धस्य बाधको न पुनर्मनाक् ॥ १७० ॥
मध्यमादृषभे पातः सोरटीं दर्शयेद्यदि ।
अभावो धैवतस्यैव तदंगं दूरतां नयेत् ॥ ७१ ॥
सुहानाम्न्यां तथाऽड्डाणे गांधारस्य यतो विधिः ।
तद्रूपयोः प्रभिन्नत्वे नो स्यात्कस्यापि संशयः ॥ ७२ ॥
मल्लारो मध्यमादिश्च मिश्रितावत्र रूपके ।
इति लक्ष्यविदां तावन्मतं भाति सुसंगतम् ॥ ७३ ॥

मीयांमल्लारः

हरप्रियाभिधे मेले जायते विबुधप्रियः ।
मीयांमल्लारनामाऽसौ वर्षासु सुखदायकः ॥ ७४ ॥
संवादिनौ सपौ प्रोक्तौ गांधारे दोलनं शुभम् ।
निधयोरेव संयोगाद्भवेद्रागस्य मंडनम् ॥ ७५ ॥
मंद्रस्थानगतं गानं सर्वेषां हृदयंगमम् ।
विलंबितलयालापो नूनमाकर्षयेन्मनः ॥ ७६ ॥
निषादद्वयसंयोगः स्वतंत्रो रागवाचकः ।
प्रच्छन्नधैवतः कुर्याद्बाहारस्यापवारणम् ॥ ७७ ॥
कंप्रगांधारके स्पष्टः कर्णाटो व्यंजितो भवेत् ।
मध्यमादृषभे पातो मल्लार्यंगं सुनिर्णयेत् ॥ ७८ ॥
कर्णाटगौडसंयोगाद्यदयमुत्थितो मतः ।
प्रशस्तो मध्यमो व्यस्तो निपयोः संगतिः सदा ॥ ७९ ॥

मध्यमादिः ( मध्यमावती )

काफीमेलसमुत्पन्ना मध्यमादिः प्रकीर्तिता ।
व्यवहारे मता नित्यमौडवा धगवर्जिता ॥ १८० ॥
स्वीकृतो ह्युपभेदोऽयं सारंगस्यैव सर्वथा ।
गानं चाभिमतं नूनं मध्याह्ने सर्वरक्तिदम् ॥ ८१ ॥
ऋषभस्यात्र वादित्वं लक्ष्ये लोकसुसंमतम् ।
निषादस्यापि तत्प्रोक्तमहोबलमनीषिणा ॥ ८२ ॥
बहुलत्वं रिस्वरस्य ज्ञात्वा दिनेऽपवादकम् ।
विकल्पेन निषादस्य कदाचित्स्यात् प्रसूचितम् ॥ ८३ ॥
उत्तरांगे समादिष्टा निपयोः संगतिःप्रिया ।
मध्यरात्रिप्रगेयेषु कर्णाटेष्वप्यसौ तथा ॥ ८४ ॥
प्रकारा बहवो लक्ष्ये सारंगस्य समीरिताः ।
तत्रापि सुप्रसिद्धा ये संगृहीता मयाऽत्र ते ॥ ८५ ॥
संवादित्वं तु भिन्नेषु स्वरेषु परिकल्पनात् ।
निर्मितिर्भिन्नरूपाणां संभवेदिति मे मतिः ॥ ८६ ॥

टिप्पनी.

मध्याह्ने मध्यरात्र्यां च सारंगांगं स्वतंत्रकम्।
तत्कालगेयरूपेषु महद्वैचित्र्यकारणम् ॥ ८७ ॥
सुहासुघ्रीमुखाः प्रोक्ता दिनगेयास्तदंगजाः।
साहानाड्डाणकाद्यास्ते रात्रिगेयास्तथैव च ॥ ८८ ॥
वृंदावनी मध्यमादिः सारंगः शुद्धपूर्वकः।
सामंतो बडहंसश्च मीयांसारंगनामकः।
तथालंकादहनाख्य एते भेदा बहुश्रुताः ॥ ८९ ॥

शुद्धसारंगः

हरप्रियाह्वमेले स्याच्छुद्धसारंगसंभवः।
आरोहे चावरोहेपि गांधारो वर्जितस्वरः ॥ १९० ॥
रिषभोऽत्र मतो वादी संवादी पंचमो भवेत्।
द्वितीयप्रहरे गानं सर्वरक्तिप्रदं भवेत् ॥ ९१ ॥
धैवतस्य प्रयोगोऽस्मिन् व्यक्तो यत्परिकीर्तितः।
मध्यमादेः प्रभिन्नत्वं स्फुटमेव न संशयः ॥ ९२ ॥
ग्रंथेषु दाक्षिणात्यानां गमौ तीव्रौ समीरितौ।
न तल्लक्ष्ये सुप्रतीतं यतो न मे सुसंमतम् ॥ ९३ ॥
मध्यमौ द्वौ निषादौ द्वौ पारिजाते समीरितौ।
तदपि न यतो दृष्टं लक्ष्ये न स्यात् सुसंगतम् ॥ ९४ ॥
केचिदत्र मतीव्रत्वं प्रकल्प्य गानकोविदाः।
कामोदसंनिभं रूपं स्वतंत्रं मेनिरे ध्रुवम् ॥ ९५ ॥
तीव्रमध्यमसंयुक्तं धगस्वरविवर्जितम्।
सूरसारंगनामानं केचिदन्ये पुनर्जगुः ॥ ९६ ॥
एवं मया समाख्याता मतभेदा अमायया।
यथायोग्यं विमृश्यैतान् बुधैः कार्यः स्वनिर्णयः ॥ ९७ ॥

टिप्पनी.

सारंगे गधवर्जत्वं मतं सामान्यलक्षणम्।
तथापि च गवर्जत्वं रागव्यंजनमीरितम् ॥ ९८ ॥
तानसेनप्रिया रागाः कानडांगेन मंडिताः।
श्रूयंते यैल्लक्षणं तत् सारंगेऽपि सुसंगतम् ॥ ९९ ॥

वृंदावनसारंगः

कर्णाटस्यैव मेलाच्च वृंदावन इतीरितः ।
सारंगः शोभनो रागः सर्वत्र गुणिसंमतः ॥ २०० ॥
गधयोः स्यात्परित्याग आरोहे बहुसंमतः ।
धैवतस्यावरोहेऽसावीषत्स्पर्शो न बाधकः ॥ १ ॥
रिषभो नियतो वादी संवादी पञ्चमो भवेत् ।
मध्यमादौ निषादे स्यादमात्यत्वं सुसंगतम् ॥ २ ॥
केचिद्वृंदावनेऽप्याहुर्निषादं तीव्रसंज्ञितम् ।
यतस्तस्य सदैव स्याल्लोके व्यक्ता सुखं भिदा ॥ ३ ॥
गधयोर्गोपनं लक्ष्ये मुख्यं सारंगलक्षणम् ।
यथायोग्यप्रमाणेन प्रायः सर्वत्र लक्षितम् ॥ ४ ॥

मीयांकृतसारंगः

हरप्रियाह्वये मेले मीयांसारंग उच्यते ।
अन्विष्टस्तानसेनेनेत्याहुर्लक्ष्ये विचक्षणाः ॥ ५ ॥
यतः सारंगभेदोऽयं महत्वं रिस्वरे स्फुटम् ।
मंद्रमध्यस्वरैर्गीतो रक्तेः कुर्याद्विवर्धनम् ॥ ६ ॥
ईषद्धन्योः संगतिः स्यान्मंद्रे रागोपलब्धये ।
मीयांमल्लारिकाच्छाया तत्रैव स्यात् सुलक्षिता ॥ ७ ॥
कानडः सुप्रियो रागस्तानसेनस्य विश्रुतः ।
अत्रापि संगतिस्तस्य केषांचित्संमता ध्रुवम् ॥ ८ ॥
यावनिकेषु रूपेषु ह्येतादृशेषु नित्यशः ।
केवलं लक्ष्यमादृत्य सत्कार्यं तत्र वर्तनम् ॥ ९ ॥
वृंदावने कोमलस्य निषादस्यैव लंघनात् ।
प्रत्यक्षः संभवेद्भेदः सुबोधोऽपि सतां मते ॥ २१० ॥
धैवतस्य स्वल्पयोगे शुद्धसारंग नामकः ।
सुभिन्नमाप्नुयाद्रूपं निर्दौर्बल्यात्तथैव च ॥ २११ ॥
कामोदांगेन विख्यातः सूरसारंगसंज्ञितः ।
न भेदं दर्शयेत्तीव्रमध्यमेन स्वरेण किम् ॥ २१२ ॥
मध्यमादौ रिधौ नस्त आरोहे चावरोहणे ।
पूर्णः स्याद्भूमसारंग एवं भेदाः परिस्फुटाः ॥ २१३ ॥

## सुगायनलक्षणम्.

रत्नाकरे,

हृद्यशब्दः सुशारीरो ग्रहमोक्षविचक्षणः ।
रागरागांगभाषांगक्रियांगोपांगकोविदः ॥ १ ॥
प्रबंधगाननिष्णातो विविधालप्तितत्ववित् ।
सर्वस्थानोच्चगमकेष्वनायासलसद्गतिः ॥ २ ॥
आयत्तकंठस्तालज्ञः सावधानो जितश्रमः ।
शुद्धच्छायालगाभिज्ञः सर्वकाकुविशेषवित् ॥ ३ ॥
अपारस्थायसंचारः सर्वदोषविवर्जितः ।
क्रियापरोऽजस्रलयः सुघटो धारणान्वितः ॥ ४ ॥
स्फूर्जन्निर्जवनो हारिरहःकृद्भजनोद्धुरः ।
सुसंप्रदायो गीतज्ञैर्गीयते गायनाग्रणीः ॥ ५ ॥

सदोषगायनलक्षणम्.

संदष्टोद्घृष्टसूत्कारिभीतशंकितकंपिताः ।
कराली विकलः काकी वितालकरभोद्भडाः ॥ ६ ॥
झोंबकस्तुंबकी वक्री प्रसारी विनिमीलकः ।
विरसापस्वराव्यक्तस्थानभ्रष्टाव्यवस्थिताः ॥ ७ ॥
मिश्रकोऽनवधानश्च तथाऽन्यः सानुनासिकः ।
पंचविंशतिरित्येते गायना निंदिता मताः ॥ ८ ॥

सुशारीरलक्षणम्.

रागाभिव्यक्तिशक्तत्वमनभ्यासेऽपि यद्ध्वनेः ।
तच्छारीरमिति प्रोक्तं शरीरेण सहोद्भवात् ॥ ९ ॥
तारानुध्वनिमाधुर्यरक्तिगांभीर्यमार्दवैः ।
घनतास्निग्धताकांतिप्राचुर्यादिगुणैर्युतम् ॥ १० ॥
तत्सुशारीरमित्युक्तं लक्ष्यलक्षणकोविदैः ।
अनुध्वानविहीनत्वं रुक्षत्वं त्यक्तरक्तिता ॥ ११ ॥
निःसारता विस्वरता काकित्वं स्थानविच्युतिः ।
कार्श्यं कार्कश्यमित्याद्यैः कुशारीरं कुदूषणैः ॥ १२ ॥

### प्रस्तुतसंगीतस्थितिः

अस्मत्संगीतं स्वायत्तीकृतमशिक्षितैर्जनैः ।
अतोऽत्र दोषबाहुल्यं स्वभावादुपलभ्यते ॥ १३ ॥
संगीतस्य सुशिक्षितशिक्षकाभावतोऽधुना ।
तारतम्यपरिज्ञानसाधनं नैव विद्यते ॥ १४ ॥
सम्यक्तयाऽन्यथा वैतदत एवाभिमन्यते ।
संगीतं मोहिनीरूपमित्याहुः सत्यमेव तत् ॥ १५ ॥
योग्यरसभावभाषारागप्रभृतिसाधनैः ।
गायकः श्रोतृमनसि नियतं जनयेत्फलम् ॥ १६ ॥
अस्मदीयेष्वाधुनिकगायकेषु समंततः ।
यथोक्तनियमान् ज्ञात्वा गायंतो विरला जनाः ॥ १७ ॥
भाषाऽव्यक्ता हावभावाः प्रतीयंते विसंगताः ।
व्यस्ताश्चेष्टास्तथाऽऽक्रोशाः केवलं कर्कशा मताः ॥ १८ ॥
एतादृग्गायनान्न स्यात्परिणामो ह्यभीप्सितः ।
ततो हास्यरसस्यैव केवलं स्यात् समुद्भवः ॥ १९ ॥
अर्थं विना हावभावा वीररसस्य ये सदा ।
दृश्यंते गायके तेभ्यः कथं स्यादुत्तमं फलम् ॥ २० ॥
अनुसृत्यैव शब्दार्थं ध्वनेः संक्रमणं भवेत् ।
गायकास्तादृशा दृष्टाः स्वपद्यार्थं न ये विदुः ॥ २१ ॥
कथमेते विजानीयू रसभावरहस्यकम् ।
तथैव ते कथं विद्युः संगीतस्वरसंक्रमम् ॥ २२ ॥

### उपसंहारः

भिद्यतेऽनेकधादेशी संगीतमिति विश्रुतम् ।
ययोः कयोरपि भवेद्ग्रंथयोर्नैकवाक्यता ॥ २३ ॥
अत एवातिकठिनं तादृग्ग्रंथस्य लेखनम् ।
यः सर्वत्रोपयुज्येत समभावेन केवलम् ॥ २४ ॥
नैव द्रव्यार्जनोद्देशः शंकनीयोऽत्र कश्चन ।
संगीतेष्टाध्वशिक्षार्थं यत्नस्त्वेष मया कृतः ॥ २५ ॥

नूनं पद्धत्यनुगुणशिक्षणाभ्यासतः सताम् ।
आवश्यकतया तादृग्ग्रंथापेक्षाऽपि विद्यते ॥ २६ ॥
कीदृग्ग्रंथा इष्टा इति प्रतीयेत सतां यदा ।
तदापि स्यान्मदायाससाफल्यमिति मे मतिः ॥ २७ ॥
नूत्नशिष्यापेक्षयादौ स्युरिष्टा योग्यशिक्षकाः ।
अध्यापयिष्यंति तेऽमुं विषयं सम्यगेव हि ॥ २८ ॥
ग्रंथस्योद्देश आदौ स्यादस्य शिक्षकनिर्मितिः ।
शिष्यानध्यापयिष्यंति तादृशाः शिक्षकास्ततः ॥ २९ ॥
इति श्रीलक्ष्यसंगीतद्वितीयाध्याय ईरितः ।
चतुराख्येन भरतपूर्वखंडनिवासिना ॥ ३० ॥

एवं श्रीमल्लक्ष्यसंगीतनामा ।
यत्नैर्नूत्नो निर्मितोऽयं प्रबंधः ।
प्राचीनार्वाचीनसंगीतभक्त-
प्रीत्यै यातः पूर्णतामत्र सद्यः ॥ ३१ ॥


॥ इति श्रीमल्लक्ष्यसंगीतं संपूर्णम् ॥

# । परिशिष्टम् ।

## प्रसिद्धप्राचीनग्रंथोक्तरागवर्गीकरणानि

### रत्नाकरे,

### शुद्धादिपंचगीतिसमाश्रितत्रिंशद्ग्रामरागनामानि,

#### शुद्धायाम् ७

| | | |
|---|---|---|
| १ षड्जग्रामः | २ मध्यमग्रामः | ३ शुद्धकैशिकः |
| ४ शुद्धपंचमः | ५ शुद्धकैशिकमध्यमः | ६ शुद्धसाधारितः |
| | ७ शुद्धषाडवः | |

#### भिन्नायाम् ५

| | | |
|---|---|---|
| १ भिन्नषड्जः | २ भिन्नपंचमः | ३ भिन्नकैशिकः |
| ४ भिन्नतानः | ५ भिन्नकैशिकमध्यमः | |

#### गौड्याम् ३

| | | |
|---|---|---|
| १ गौडकैशिकः | २ गौडपंचमः | ३ गौडकैशिकमध्यमः |

#### वेसरायाम् ८

| | | |
|---|---|---|
| १ सौवीरः | २ टक्कः | ३ बोट्टः |
| ४ मालवकैशिकः | ५ टक्ककैशिकः | ६ हिंदोलः |
| ७ मालवपंचमः | ८ वेसरषाडवः | |

#### साधारण्याम् ७

| | | |
|---|---|---|
| १ रूपसाधारः | २ शकः | ३ भंमाणपंचमः |
| ४ नर्तः | ५ गांधारपंचमः | ६ षड्जकैशिकः |
| ७ कुकुभः | | |

### उपर्युक्तेषु ग्रामरागेषु ये भाषाविभाषांतरभाषाजनकाः,

| | | | | |
|---|---|---|---|---|
| १ सौवीरः | २ ककुभः | ३ टक्कः | ४ पंचमः | ५ भिन्नपंचमः |
| ६ टक्ककैशिकः | ७ हिंदोलः | ८ बोट्टः | ९ मालवकैशिकः | १० गांधारपंचमः |
| ११ भिन्नषड्जः | १२ वेसरषाडवः | १३ मालवपंचमः | १४ तानः | १५ पंचमषाडवः |

## ग्रामरागजनितभाषादिकनामानि,

### १ सौवीरे, भाषाः ४

१ सौवीरी    २ वेगमध्यमा    ३ साधारिता    ४ गांधारी

### २ ककुभे, भाषाः ६

१ भिन्नपंचमी    २ कांबोजी    ३ मध्यमग्रामा    ४ रगंती    ५ मधुरी    ६ शकमिश्रा

### विभाषाः ३

१ भोगवर्द्धनी    २ आभीरिका    ३ मधुकरी

### अंतरभाषा १

१ शालवाहनिका

### ३ टक्के, भाषाः २१

| | | |
|---|---|---|
| १ त्रवणा | २ त्रवणोद्भवा | ३ वैरंजी |
| ४ मध्यमग्रामदेहा | ५ मालववेसरी | ६ छेवाटी |
| ७ सैंधवी | ८ कोलाहला | ९ पंचमलक्षिता |
| १० सौराष्ट्री | ११ पंचमी | १२ वेगरंजी |
| १३ गांधारपंचमी | १४ मालवी | १५ तानवलिता |
| १६ ललिता | १७ रविचंद्रिका | १८ ताना |
| १९ बाहेरिका | २० दोह्या | २१ वेसरी |

### विभाषाः ४

१ देवारवर्धनी    २ आंध्री    ३ गुर्जरी    ४ भावनी

### ४ पंचमे, भाषाः १०

| | | | | |
|---|---|---|---|---|
| १ कैशिकी | २ त्रावणी | ३ तानोद्भवा | ४ आभीरी | ५ गुर्जरी |
| ६ सैंधवी | ७ दाक्षिणात्या | ८ आंध्री | ९ मांगली | १० भावनी |

### विभाषे २

१ भम्माणी    २ आंधालिका

### ५ भिन्नपंचमे, भाषाः ४

१ धैवतभूषिता    २ शुद्धभिन्ना    ३ वराटी    ४ विशाला

**विभाषा १**

१ कौशली

**६ टक्ककैशिके, भाषे २**

| | |
|---|---|
| १ मालवा | २ भिन्नवलिता |

**विभाषा १**

१ द्राविडी

**७ हिंदोले, भाषाः ९**

| | | |
|---|---|---|
| १ वेसरी | २ चूतमंजरी | ३ षड्जमध्यमा |
| ४ मधुरी | ५ भिन्नपौराली | ६ गौडी |
| ७ मालववेसरी | ८ छेवाटी | ९ पिंजरी |

**८ बोट्टे, भाषा १**

१ मांगली

**९ मालवकैशिके, भाषाः १३**

| | | | | |
|---|---|---|---|---|
| १ बंगाली | २ खंजिनी | ३ मांगली | ४ हर्षपुरी | ५ मालववेसरी |
| ६ गुर्जरी | ७ गौडी | ८ पैराली | ९ अर्धवेसरी | १० शुद्धा |
| ११ मालवरूपा | १२ सैंधवी | १३ आभीरी | | |

**विभाषे २**

| | |
|---|---|
| १ कांबोजी | २ देवारवर्धनी |

**१० गांधारपंचमे, भाषा १**

१ गांधारी

**११ भिन्नषड्जे, भाषाः १७**

| | | |
|---|---|---|
| १ गांधारवल्ली | २ कच्छेली | ३ स्वरवल्ली |
| ४ निषादिनी | ५ त्रवणा | ६ मध्यमा |
| ७ शुद्धा | ८ दाक्षिणात्या | ९ पुलिंदिका |
| १० तुंबुरा | ११ षड्जभाषा | १२ कालिंदी |
| १३ ललिता | १४ श्रीकंठी | १५ बंगाली |
| १६ गांधारी | १७ सैंधवी | |

**विभाषाः ४**

१ पौराली | २ मालवा | ३ कालिंदी | ४ देवारवर्धनी

**१२ वेसरषाडवे, भाषे २**

१ बाह्या | २ बाह्यषाडवा

**विभाषे २**

१ पार्वती | २ श्रीकंठी

**१३ मालवपंचमे, भाषाः ३**

१ वेदवती | २ भाविनी | ३ विभाविनी

**१४ ताने, भाषा १**

१ तानोद्भवा

**१५ पंचमषाडवे, भाषा १**

१ पोता

**मतांतरे रेवगुप्ते भाषा १**

१ शका

**अनुक्तजनका, विभाषा १**

१ पल्लवी

**अंतरभाषाः ३**

१ भासवलिता | २ किरणावली | ३ शकवलिता

**रत्नाकरोक्तोपरागाः ८**

| | | | |
|---|---|---|---|
| १ शकतिलकः | २ टक्कसैंधवः | ३ कोकिलापंचमः | ४ रेवगुप्तः |
| ५ पंचमषाडवः | ६ भावनापंचमः | ७ नागगांधारः | ८ नागपंचमः |

**रागाः २०**

| | | | |
|---|---|---|---|
| १ श्रीरागः | २ नट्टः | ३ बंगालः | ४ द्वितीयबंगालः |
| ५ भासः | ६ मध्यमषाडवः | ७ रक्तहंसः | ८ कोल्हहासः |
| ९ प्रसवः | १० ध्वनिः | ११ भैरवः | १२ मेघरागः |
| १३ सोमः | १४ कामोदः | १५ द्वितीयकामोदः | १६ आम्रपंचमः |
| १७ कंदर्पः | १८ देशाख्यः | १९ कैशिककुकुभः | २० नट्टनारायणः |

# रागांगभाषांगक्रियांगोपांगनामानि,

## पूर्वप्रसिद्धानि रागांगानि ८

| | | | |
|---|---|---|---|
| १ शंकराभरणः | २ घंटारवः | ३ आहंसः | ४ दीपकः |
| ५ रीतिः | ६ पूर्णाटिका | ७ लाटी | ८ पल्लवी |

## भाषांगानि ११

| | | | |
|---|---|---|---|
| १ गांभीरी | २ वौहाटी | ३ खशिका | ४ उत्पली |
| ५ गोल्ली | ६ नादांतरी | ७ नीलोत्पली | ८ छाया |
| ९ तरंगिणी | १० गांधारगतिः | ११ गेरंजी | |

## क्रियांगानि १२

| | | | |
|---|---|---|---|
| १ भावक्री | २ स्वभावक्री | ३ शिवक्री | ४ मरुकक्री |
| ५ त्रिनेत्रक्री | ६ कुमुदक्री | ७ दनुक्री | ८ ओजक्री |
| ९ इंद्रक्री | १० नागकृतिः | ११ धन्यकृतिः | १२ विपायक्री |

## उपांगानि ३

| | | |
|---|---|---|
| १ पूर्णाटः | २ देवालः | ३ गुरुंजिका |

# अधुनाप्रसिद्धरागांगादिकानां नामानि

## रागांगानि १३

| | | | |
|---|---|---|---|
| १ मध्यमादिः | २ मालवश्रीः | ३ तोडी | ४ बंगालः |
| ५ भैरवः | ६ वराटी | ७ गुर्जरी | ८ गौडः |
| ९ कोलाहलः | १० वसंतः | ११ धनाश्रीः | १२ देशी |
| १३ देशाख्या | | | |

## भाषांगानि ९

| | | |
|---|---|---|
| १ डोंबक्री | २ प्रथममंजरी | ३ शुद्धवराटिका |
| ४ आसावरी | ५ आदिकामोदी | ६ नागध्वनिः |
| ७ वेलावली | ८ नट्टा | ९ कर्णाटबंगालः |

**उपांगानि २७**

| | | |
|---|---|---|
| १ कुंतलवराटी | १० सौराष्ट्रगुर्जरी | १९ छायानट्टा |
| २ द्राविडीवराटी | ११ दक्षिणागुर्जरी | २० रामकृतिः |
| ३ सैंधवीवराटी | १२ द्राविडीगुर्जरी | २१ वल्लातिका |
| ४ स्थानवराटी | १३ भुंच्छिका | २२ मह्लारी |
| ५ हतस्वरवराटी | १४ स्तंभतीर्थिका | २३ मह्लारः |
| ६ प्रतापवराटी | १५ छायावेलावली | २४ कर्णाटगौडः |
| ७ छायातोडी | १६ प्रतापवेलावली | २५ देशवालगौडः |
| ८ तुरुष्कतोडी | १७ भैरवी | २६ तुरुष्कगौडः |
| ९ महाराष्ट्रगुर्जरी | १८ सिंघलीकामोदा | २७ द्रविडगौडः |

**"सर्वेषामिति रागाणां मिलितानां शतद्वयम् ।**
**चतुःषष्ट्यधिकं ब्रूते शार्ङ्गी श्रीकरणाग्रणीः ॥"**

**रागसंख्यानिर्णयः**

| | | | |
|---|---|---|---|
| ग्रामरागाः | ३० | भाषारागाः | ९६ |
| उपरागाः | ८ | विभाषारागाः | २० |
| रागाः | २० | अंतर्भाषारागाः | ४ |

| | | | |
|---|---|---|---|
| पूर्वप्रसिद्धरागांगानि | ८ | शार्ङ्गदेवसमयप्रसिद्धरागांगानि | १३ |
| ——— भाषांगानि | ११ | ——— भाषांगानि | ९ |
| ——— क्रियांगानि | १२ | ——— ,, ——— क्रियांगानि | ३ |
| ——— उपांगानि | ३ | ——— ,, ——— उपांगानि | २७ |

मिलिताः २६४ रागाः

**टिप्पनी**

**उपरिनिर्दिष्टशार्ङ्गदेवसमयप्रसिद्धरागा दाक्षिणात्यपद्धत्यामद्यापि तत्तन्नामभिरुपलब्धा इति विचारणीयम्**

## संगीतदर्पणे,

### शिवमते, रागाः ६

| | | |
|---|---|---|
| १ श्रीरागः | २ वसंतः | ३ पंचमः |
| ४ मेघः | ५ भैरवः | ६ बृहन्नाटः |

### १ श्रीरागभार्याः ६

| | | |
|---|---|---|
| १ मालवी | २ त्रिवणी | ३ गौरी |
| ४ केदारी | ५ मधुमाधवी | ६ पाहाडिका |

### २ वसंतभार्याः ६

| | | |
|---|---|---|
| १ देशी | २ देवगिरी | ३ वराटी |
| ४ तोडी | ५ ललिता | ६ हिंदोली |

### ३ भैरवभार्याः ६

| | | |
|---|---|---|
| १ भैरवी | २ गुर्जरी | ३ रामकिरी |
| ४ गुणकिरी | ५ बंगाली | ६ सैंधवी |

### ४ पंचमभार्याः ६

| | | |
|---|---|---|
| १ विभाषा | २ भूपाली | ३ कर्णाटी |
| ४ बडहंसिका | ५ मालवी | ६ पटमंजरी |

### ५ मेघभार्याः ६

| | | |
|---|---|---|
| १ मल्लारी | २ सोरटी | ३ सावेरी |
| ४ कौशिकी | ५ गांधारी | ६ हरशृंगारा |

### ६ नट्टनारायणभार्याः ६

| | | |
|---|---|---|
| १ कामोदी | २ आभीरी | ३ नाटिका |
| ४ कल्याणी | ५ सारंगी | ६ नट्टहंबीरा |

## रागार्णवमते

### षड्रागाः

| | | |
|---|---|---|
| १ भैरवः | ३ नाटः | ५ गौडमालवः |
| २ पंचमः | ४ मल्लारः | ६ देशाख्यः |

**भैरवाश्रितरागाः ५**

१ बंगाली २ गुणकिरी ३ मध्यमादिः ४ वसंतः ५ धनाश्रीः

**पंचमाश्रितरागाः ५**

१ ललिता २ गुर्जरी ३ देशी ४ वराडी ५ रामकृतिः

**नाटसंश्रिता रागाः ५**

१ नट्टनारायणः २ गांधारः ३ सालगः ४ केदारः ५ कर्णाटकः

**मल्लारसंश्रया रागाः ५**

१ मेघः २ मल्लारी ३ मालकौशिकः ४ पटमंजरी ५ आसावरी

**गौडमालवाश्रितरागाः ५**

१ हिंदोलः २ त्रिवणा ३ आंधाली ४ गौरी ५ पठहंसिका

**देशाख्याश्रिता रागाः ५**

१ भूपाली २ कुडायी ३ कामोदी ४ नाटिका ५ वेलावली

## हनूमन्मते

**षड्रागाः**

१ भैरवः
२ कौशिकः
३ हिंदोलः
४ दीपकः
५ श्रीरागः
६ मेघः

**भैरवांगनाः ५**

१ मध्यमादिः २ भैरवी ३ बंगाली ४ वराटी ५ सैंधवी

**कौशिकांगनाः ५**

१ तोडी २ खंबावती ३ गौरी ४ गुणक्री ५ कुकुभा

**हिंदोलवरांगनाः ५**

१ वेलावली २ रामकिरी ३ देशाख्या ४ पटमंजरी ५ ललिता

**दीपकभार्याः ५**

१ केदारी २ कानडा ३ देशी ४ कामोदी ५ नाटिका

**श्रीरागभार्याः ५**

१ वासंती २ मालवी ३ मालश्रीः ४ धंनासिका ५ आसावरी

**मेघयोषितः ५**

१ मल्लारी २ देशकारी ३ भूपाली ४ गुर्जरी ५ टंकी

## रागविबोधे,

### जनकमेलाः २३

१ मुखारी
२ रेवगुप्तिः
३ सामवरालिः
४ तोडी
५ नादरामक्री
६ भैरवः
७ वसंतः
८ वसंतभैरवी
९ मालवगौडः
१० रीतिगौडः
११ आभीरनाटः
१२ हंमीरः
१३ शुद्धवराटी
१४ शुचिरामक्री
१५ श्रीरागः
१६ कल्याणः
१७ कांबोदी
१८ मल्लारी
१९ सामंतः
२० कर्णाटगौडः
२१ देशाक्षी
२२ शुद्धनाटः
२३ सारंगः

### जन्यरागाः ७६

| मेलनाम | जन्यरागाः |
|---|---|
| १ मुखारी | १ मुखारी २ तुरुष्कतोडी ( हुसेनी ) |
| २ रेवगुप्तिः | १ रेवगुप्ती |
| ३ सामवराली | १ सामवराली २ वसंतवराली |
| ४ तोडी | १ तोडी |
| ५ नादरामक्री | १ नादरामक्री |
| ६ भैरवः | १ भैरवः, २ पौरविका |
| ७ वसंतः | १ वसंतः, २ टक्कः, ३ हिंजेजः, ४ हिंदोलः |
| ८ वसंतभैरवी | १ वसंतभैरवी, २ मारविका |
| ९ मालवगौडः | १ मालवगौडः २ चैतीगौडी ३ पूर्वी ४ पाडी ५ देवगांधारः ६ गौडक्रिया ७ कुरंजी ८ बहुली ९ रामक्री १० पावकः ११ आसावरी १२ पंचमः १३ बंगालः १४ शुद्धललिता १५ गुर्जरी १६ परजः १७ शुद्धगौडः |
| १० रीतिगौडः | १ रीतिगौडः |
| ११ आभीरः | १ आभीरी |
| १२ हंमीरः | १ हंमीरः, २ विहंगडः, ३ केदारः |
| १३ शुद्धवराटी | १ शुद्धवराटी |
| १४ शुद्धरामक्री | १ देशकारः, २ ललितः, ३ जेताश्रीः, ४ त्रावणी ५ देशी |
| १५ श्रीरागः | १ श्रीरागः, २ मालश्रीः, ३ धन्याशिका, ४ भैरवी, ५ धवला, ६ सैंधवी |

| | |
|---|---|
| १६ कल्याणः | १ कल्याणः, |
| १७ कांबोदी | १ कांबोदी, २ देवक्रीः |
| १८ मल्लारी | १ मल्लारिः, २ नटमल्लारिः, ३ पूर्वगौडः, ४ भूपाली, ५ गौडः, ६ शंकराभरणः, ७ नटनारायणः, ८ नारायणगौडः, ९ द्वितीयकेदारः, १० सालंकनाटः, ११ वेलावली, १२ मध्यमादिः, १३ सावेरी, १४ सौराष्ट्री. |
| १९ सामंतः | १ सामंतः |
| २० कर्णाटः | १ कर्णाटः, २ अड्डाणः, ३ नागध्वनिः, ४ शुद्धबंगालः, ५ वर्णनाटः, ६ तुरुष्कतोडी (ईराख इति भाषायाम्) |
| २१ देशाक्षी | १ देशाक्षी |
| २२ शुद्धनाटः | १ शुद्धनाटः |
| २३ सारंगः | १ सारंगः |

---

## स्वरमेलकलानिधौ,

### जनकमेलरागाः २०

| | | | |
|---|---|---|---|
| १ मुखारी* | ६ शुद्धरामक्रिया | ११ नादरामक्री | १६ हेजुज्जिः† |
| २ मालवगौडः | ७ देशाक्षी | १२ शुद्धवराटी | १७ सामवराली |
| ३ श्रीरागः | ८ कंनडगौडः | १३ रीतिगौडः | १८ रेवगुप्तिः‡ |
| ४ सारंगनाटः | ९ शुद्धनाटः | १४ वसंतभैरवी | १९ सामंतः |
| ५ हिंदोलः | १० अहीरी | १५ केदारगौडः | २० कांबोजी |

* "अस्मिन्मेले मुखारी च ग्रामरागाश्च केचन ।
संमतः शुद्ध इत्येष शार्ङ्गदेवविपश्चितः ॥

† "शुद्धौ च षड्जरिषभौ शुद्धाश्च मपधास्तथा ।
गांधारोऽतरसंज्ञश्च काकल्याख्यनिषादकः ॥
एतावत्स्वरसंयुक्तो हेजुज्जीमेलको भवेत् ।
हेजुज्याद्याः भवंत्यत्र ग्रामरागाश्च केचन ॥
इत्येष शार्ङ्गदेवस्य संमतो मार्गवेदिनः ॥

‡ "शुद्धाः सरिमपाः शुद्धौ धनी गांधारकोंतरः ।
एतैः सप्तस्वरै रेव गुप्तिमेल उदाहृतः ॥
तस्मिन् रागो रेवगुप्तिः शुद्धरागाश्च केचन ।
रत्नाकरस्य मेलानां शार्ङ्गदेवेन लक्षितम् ॥

## अथ जन्यरागवर्गीकरणम्

| मेलनाम | |
|---|---|
| १ मुखारी | १ मुखारी |
| २ मालवगौड: | १ मालवगौड:, २ ललिता, ३ बहुली, ४ सौराष्ट्र:, ५ गुर्जरी, ६ मेचबौळी, ७ फलमंजरी, ८ गुंडक्री, ९ सिंधुरामक्री, १० छायागौळ:, ११ कुरंजी, ११ कंनडबंगाल:, १३ मंगलकैशिक:, १४ मलहरी. |
| ३ श्रीराग: | १ श्रीराग:, २ भैरवी, ३ गौळी, ४ धन्यासी, ५ शुद्धभैरवी, ६ वेलावली, ७ मालवश्री:, ८ शंकराभरण:, ९ आंधाली, १० देवगांधार:, ११ मध्यमादि: |
| ४ सारंगनाट: | १ सारंगनाट:, २ सावेरी, ३ सालगभैरवी, ४ नटनारायणी, ५ शुद्धवसंत:, ६ पूर्वगौड:, ७ कुंतलवराडी, ८ भिन्नषड्ज:, ९ नारायणी. |
| ५ हिंदोल: | १ हिंदोल:, २ मार्गहिंदोल:, ३ भूपाल:. |
| ६ शुद्धरामक्रिया | १ शुद्धरामक्रिया, २ बौळी, ३ आर्द्रदेशी, ४ दीपक:. |
| ७ देशाक्षी | १ देशाक्षी. |
| ८ कंनडगौळ: | १ कंनडगौळ: २ घंटारव:, ३ शुद्धबंगाल:, ४ छायानाट:, ५ तुरुष्कतोडी, ६ नागध्वनि:, ७ देवक्रिया. |
| ९ शुद्धनाट: | १ शुद्धनाट:. |
| १० अहीरी | १ अहीरी. |
| ११ नादरामक्रिया | १ नादरामक्रिया. |
| १२ शुद्धवराळी | १ शुद्धवराळी. |
| १३ गौळ: | १ रीतिगौळ:. |
| १४ वसंतभैरवी | १ वसंतभैरवी, २ सोमराग:. |
| १५ केदारगौळ: | १ केदारगौड:, २ नारायणगौड:. |
| १६ हेजुज्जी | १ हेजुज्जी. |
| १७ सामवराळी | १ सामवराळी. |
| १८ रेवगुप्ति: | १ रेवगुप्ति: |
| १९ सामंत: | १ सामंत:. |
| २० कांबोजी | १ कांबोजी. |

## चतुर्दंडिप्रकाशिकायां जनकमेलरागाः ७२

### शुद्धमध्यमयुक्ताः ३६

१ कनकांबरी
२ फेनद्युतिः
३ सामवराळी
४ भानुमती
५ मनोरंजनी
६ तनुकीर्तिः
७ सेनाग्रणीः
८ तोडी
९ भिन्नषड्जः
१० नटाभरणः
११ कोकिलरवः
१२ रूपावती
१३ हेजुज्जी
१४ वसंतभैरवी
१५ मालवगौडः
१६ वेगवाहिनी
१७ छायावती
१८ शुद्धमालवी
१९ झंकारभ्रमरी
२० रीतिगौळः
२१ किरणावली
२२ श्रीरागः
२३ गौरीवेलावली
२४ वीरवसंतः
२५ शरावती
२६ तरंगिणी
२७ सौरसेना
२८ केदारगौळः
२९ शंकराभरणः
३० नागाभरणः
३१ कलावती
३२ चूडामणिः
३३ गंगातरंगिणी
३४ छायानाटः
३५ देशाक्षी
३६ चलनाटः

### तीव्रमध्यमयुक्ताः ३६

३७ सौगंधिनी
३८ जगन्मोहनः
३९ वराळिका
४० नभोमणिः
४१ कुंभिनी
४२ रविक्रिया
४३ गीर्वाणी
४४ भवानी
४५ शैवपंतुवराळी
४६ स्तवराजः
४७ सौवीरा
४८ जीवंतिका
४९ धवलांगः
५० नामदेशी
५१ रामक्रिया
५२ रमामनोहरी
५३ गमकक्रिया
५४ वंशवती
५५ शामला
५६ चामरा
५७ सोमद्युतिः
५८ सिंहरवः
५९ धामवती
६० नैषधः
६१ कुंतलः
६२ रतिप्रियः
६३ गीतप्रियः
६४ भूषावती
६५ शांतकल्याणः
६६ चतुरंगिणी
६७ संतानमंजरी
६८ ज्योतिः
६९ धौतपंचमः
७० नासामणिः
७१ कुसुमाकरः
७२ रसमंजरिः

### एतेष्वपि लोकप्रसिद्धा मेलाः १९

१ मुखारी
२ सामवराळी
३ भूपालः
४ वसंतभैरवी
५ गौळः
६ अहीरी
७ भैरवी
८ श्रीः
९ हेजुज्जी
१० कांभोजी
११ शंकराभरणः
१२ सामंतः
१३ देशाक्षी
१४ नाटः
१५ शुद्धवराळी
१६ पंतुवराळी
१७ शुद्धरामक्री
१८ सिंहरवः
१९ कल्याणी

## जन्यरागाः

| मेलनाम | लोकप्रियजन्यरागनामानि |
| --- | --- |
| १ मुखारी | १ मुखारी. |
| २ सामवराळी | १ सामवराळी. |
| ३ भूपालः | १ भूपालः, २ भिन्नषड्जः. |
| ४ वसंतभैरवी | १ वसंतभैरवी. |
| ५ गौळः | १ गौळः, २ गुंडक्रिया, ३ सालंगनाटः, ४ नादरामक्रिया, ५ ललिता, ६ पाडी, ७ गुर्जरी, ८ बहुली, ९ मल्लहरी १० सावेरी, ११ छायागौळः, १२ पूर्वगौळः, १३ कर्णाटबंगालः, १५ सौराष्ट्रः. |
| ६ आहरी | १ आभेरी, २ हिंदोलवसंतः. |
| ७ भैरवी | १ भैरवी, २ हिंदोलः, ३ आहीरी, ४ घंटारवः, ५ रीतिगौळः. |
| ८ श्रीरागः | १ श्रीः, २ सालगभैरवी. ३ धंन्यासी, ४ मालवश्रीः, ५ देवगांधारः, ६ आंधाली, ७ वेलावली, ८ कंनडगौळः. |
| ९ हेजुज्जी | १ हेजुज्जी, २ रेवगुप्तिः. |
| १० कांभोजी | १ कांभोजी, २ केदारगौळः, ३ नारायणगौळः. |
| ११ शंकराभरणः | १ शंकराभरणः, २ आरभी. ३ नागध्वनिः, ४ सामः, ५ शुद्धवसंतः. ६ नारायणदेशाक्षी, ७ नारायणी. |
| १२ सामंतः | १ सामंतः |
| १३ देशाक्षी | १ देशाक्षी. |
| १४ नाटः | १ नाटः |
| १५ शुद्धवराळी | १ वराळी. |
| १६ पंतुवराळी | १ पंतुवराळी. |
| १७ शुद्धरामक्रिया | १ शुद्धरामक्रिया. |
| १८ सिंहरवः | १ सिंहरवः |
| १९ कल्याणी | १ कल्याणः |

## संगीतसारामृते,

### ( चतुर्दंडिप्रकाशिकोक्तद्विसप्ततिमेलरचनातत्वमत्रापि संमतम् )

लोकप्रियमेलाः १९

| | | |
|---|---|---|
| १ श्रीरागः | ८ कांभोजी | १५ वसंतभैरवी |
| २ शुद्धनाटः | ९ भैरवी | १६ भिन्नषड्जः |
| ३ मालवगौंडः | १० मुखारी* | १७ देशाक्षी |
| ४ वेलावली | ११ वेगवाहिनी | १८ छायानाटः |
| ५ वराळी | १२ सिंधुरामक्रिया | १९ सारंगः |
| ६ शुद्धरामक्रीः | १३ हेजुज्जी | |
| ७ शंकराभरणः | १४ सामवराळी | |

*"सर्वेषु रागमेलेषु मुखारीमेल आदिमः
शुद्धैः सप्तस्वरैर्युक्तो मुखारी मेल ईरितः ॥
अस्मिन्मेले मुखारी च ग्रामरागाश्च केचन ।
लोकप्रसिद्धनामाऽयं शास्त्रसिद्धाभिधस्त्वसौ ।
शुद्धसाधारित इति तुलजेंद्रेण निश्चितः ॥"

---

जन्यरागाः

| मेलनाम | जन्यरागाः |
|---|---|
| १ श्रीरागः | १ श्रीरागः २ कंनडगौळः, ३ देवगांधारः ४ सालगभैरवी, ५ शुद्धदेशी, ६ माधवमनोहरी, ७ मध्यमग्रामः, ८ सैंधवी, ९ हुसेनी, १० काफी.<br>इति संपूर्णाः<br>१ श्रीरंजनी, २ मालवश्रीः, ३ देवमनोहरी, ४ जयंतसेनः, ५ मणिरंगः.<br>इति षाडवाः<br>१ मध्यमादिः, २ शुद्धधन्यासी.<br>इत्यौडवौ |
| २ शुद्धनाटः | १ शुद्धनाटः, उदयरविचंद्रिका (टक्कभाषा) |

| मेलनाम | जन्यरागाः |
|---|---|
| ३ मालवगौडः | १ मालवगौडः, २ सालंगनाटः, ३ आर्द्रदेशी, ४ छायागौळः, ५ टक्कः, ६ गुर्जरी, ७ गुंडक्रिया, ८ फलमंजरी, ९ नादरामक्रीः, १० सौराष्ट्री, ११ मंगलकैशिकः १२ मेचबौळी. १३ मागधी, १४ गौरीमनोहरी, १५ मारुवः १६ गौळीपंतुः, १७ सावेरी, १८ पूर्वी, १९ विभासः. |
| | **इति संपूर्णाः** |
| | १ गौळः, २ पाडी, ३ ललिता, ४ कनडबंगालः, ५ मल्लहरी, ६ पूर्णपंचमः, ७ बहुली. |
| | **इति षाडवाः** |
| | १ शुद्धसावेरी, २ मेघरंजनी, ३ रेवगुप्ती, ४ मालवी. |
| | **इत्यौडवाः** |
| ४ वेलावली | १ वेलावली ( भाषांगम् ) |
| ५ वराळी | १ वराळी ( भिन्नपंचमग्रामरागभाषा ) |
| ६ शुद्धरामक्रिया | १ शुद्धरामक्रिया, २ दीपकः. |
| ७ शंकराभरणः | १ शंकराभरणः, २ आरभी, ३ शुद्धवसंतः, ४ सरस्वतीमनोहरी, ५ पूर्वगौळः, ६ नारायणी, ७ नारायणदेशाक्षी, ८ सामंतः, ९ कुरंजी, १० पूर्णचंद्रिका, ११ सुरसिंधुः, १२ गौडमल्लारः, १३ केदारः, १४ बिलहरी. |
| ८ कांभोजी | १ कांभोजी, २ नारायणगौडः, ३ केदारगौडः ४ बडहंसः, ५ नागध्वनिः, ६ छायातरंगिणी, ७ ईशमनोहरी, ८ यदुकुलकांभोजी, ९ नाटकुरंजी, १० कंनडः. |
| | **इति संपूर्णाः** |
| | १ नटनारायणी, २ आंधाली, ३ सामः, ४ मोहनः, |
| | **इति षाडवाः** |
| | १ देवक्रीः, २ मोहनकल्याणः. |
| | **इत्यौडवौ** |
| ९ भैरवी | १ भैरवी, २ आहीरी, ३ घंटारवः, ४ इंदुघंटारवः, ५ रीतिगौळः, ६ आनंदभैरवी, ७ हिंदोलवसंतः ८ आभीरी, ९ धन्यासी, १० नागगांधारी. |

| | |
|---|---|
| १० मुखारी | १ मुखारी. |
| ११ वेगवाहिनी | १ वेगवाहिनी. |
| १२ सिंधुरामक्रीः | १ सिंधुरामक्रिया, २ पंतुवराळी. |
| १३ हेज्जुज्जी | १ हिजेजी. |
| १४ सामवराळी | १ सामवराळी, २ गांधारपंचमः, ३ भिन्नपंचमः. |
| १५ वसंतभैरवी | १ वसंतभैरवी, ३ ललितपंचमः. |
| १६ भिन्नषड्जः | १ भिन्नषड्जः, २ भूपालः. |
| १७ देशाक्षी | १ देशाक्षी. |
| १८ छायानाटः | १ छायानाटः. |
| १९ सारंगः | १ सारंगः. |

## चत्वारिंशच्छतरागनिरूपणे पुंरागाः १०

| | | |
|---|---|---|
| १ श्रीरागः | ५ कौशिकः | ९ दीपकः |
| २ वसंतः | ६ मेघः | १० हंसकः |
| ३ पंचमः | ७ नट्टनारायणः | |
| ४ भैरवः | ८ हिंदोलः | |

## भार्यापुत्रादिप्रपंचः

### १ श्रीरागपरिवारः

| | |
|---|---|
| ५ स्त्रियः | १ गौडी, २ कोलाहली, ३ आंधाली, ४ द्राविडी, ५ मालवकौशिकी. |
| ४ कुमाराः | १ शुद्धगौडः, २ कर्णाटः, ३ मालवः, ४ पूर्विकः |
| ४ स्नुषाः | १ वराटी, २ बौळी, ३ मध्यमादिः, ४ आरभी. |

### २ वसंतपरिवारः

| | |
|---|---|
| ५ स्त्रियः | १ नीलांबरी, २ धनाश्रीः, ३ रामक्रीः, ४ पटमंजरी, ५ गौडक्रीः |
| ४ कुमाराः | १ सामः, २ सोमः, ३ रीतिगौळः, ४ शंकराभरणः |
| ४ स्नुषाः | १ कल्याणी, २ दुःखवराटी, ३ सावेरी, ४ तरंगिणी. |

### ३ पंचमपरिवारः

| | |
|---|---|
| ५ स्त्रियः | १ त्रिवली, २ वल्लकी, ३ खंबावती, ४ ककुभा, ५ आहरी. |
| ४ कुमाराः | १ बलहंसः, २ गांधारः, ३ देवहिंदोलः, ४ पावकः |
| ४ स्नुषाः | १ नारायणी, २ भूपाली, ३ मारू, ४ नवरोचिका. |

### ४ भैरवपरिवारः

| | |
|---|---|
| ५ स्त्रियः | १ वेलावली, २ भैरवी, ३ गुर्जरी, ४ ललिता, ५ कर्णाटी. |
| ४ कुमाराः | १ पंचवक्त्रः, २ कल्हारः, ३ ललितः, ४ चंद्रशेखरः. |
| ४ स्नुषाः | १ कुरंगमाली, २ वीचिका, ३ मंगलकौशिकी, ४ माहुली. |

### ५ कौशिकपरिवारः

| | |
|---|---|
| ५ स्त्रियः | १ तोडी, २ देवगांधारी, ३ देशाख्या, ४ गुणक्रिया, ५ शुद्धसावेरी. |
| ४ कुमाराः | १ विद्युन्मालः, २ कामोदः, ३ सारंगः, ४ मोदकः. |
| ४ स्नुषाः | १ नट्टा, २ तरंगिणी, ३ पूर्णचंद्रिका, ४ पालिका. |

### ६ मेघपरिवारः

| | |
|---|---|
| ५ स्त्रियः | १ त्रोटकी, २ मोटकी, ३ बृहन्नटा, ४ अपरा, ५ अहंनटा. |
| ४ कुमाराः | १ घंटकंठः, २ कमलः, ३ घंटारवः, ४ रोहकः. |
| ४ स्नुषाः | १ सुधामयी, २ डोंबक्री, ३ मृतसंजीवनी, ४ मेघरंजी. |

### ७ नटनारायणपरिवारः

| | |
|---|---|
| ५ स्त्रियः | १ बंगाली, २ शुद्धसालंका, ३ कांभोजी, ४ मधुमाधवी, ५ देवक्रीः. |
| ४ कुमाराः | १ शुद्धबंगालः, २ नाटः, ३ गारुडः, ४ मोहनः. |
| ४ स्नुषाः | १ त्रैलंगी, २ लांगली, ३ सोरटी, ४ हंबीरी. |

### ८ हिंदोलपरिवारः

| | |
|---|---|
| ५ स्त्रियः | १ देशी, २ शिवक्री, ३ ललिता, ४ मल्लारी, ५ सुहंसिका. |
| ४ कुमाराः | १ रमणीयः २ मुखारिः, ३ उदयत्पंचमः, ४ शुद्धवसंतः. |
| ४ स्नुषाः | १ सिंधुरामक्रिया, २ वेगवाहिनी, ३ धरा, ४ छायातरंगिणी. |

### ९ दीपकपरिवारः

| | |
|---|---|
| ५ स्त्रियः | १ आसावरी, २ नाटिका, ३ देहली, ४ कानडा, ५ केदारी. |
| ४ कुमाराः | १ केदारगौळः, २ वैरंजी, ३ होलिः, ४ सौराष्ट्रः. |
| ४ स्नुषाः | १ कुरंजमंजरी, २ नागवराली, ३ देवरंजनी, ४ सुरसिंधुः. |

१० हंसकपरिवारः

| | |
|---|---|
| ५ स्त्रियः | १ श्रीरंजनी, २ मालश्रीः, ३ सरस्वतीमनोहरी, ४ गौरी, ५ ईशमनोहरी. |
| ४ कुमाराः | १ नागध्वनिः, २ सामंतः, ३ भिन्नपंचमः, ४ टक्कः. |
| ४ स्नुषाः | १ मालवी, २ श्यामकल्याणी, ३ देशाक्षी, ४ बिलहरी. |

## रागतरंगिण्याम्

जनकसंस्थितयः, १२

| | |
|---|---|
| १ भैरवी | ७ सारंगः |
| २ तोडी | ८ मेघः |
| ३ गौरी | ९ धनाश्रीः |
| ४ कर्णाटः | १० पूर्वी |
| ५ केदारः | ११ मुखारी |
| ६ इमनः | १२ दीपकः |

जन्यरागव्यवस्था

| मेलनाम | जन्यरागाः |
|---|---|
| १ भैरवी | १ भैरवी, २ नीलांबरी. |
| २ तोडी | १ तोडी. |
| ३ गौरी | १ मालवः, २ श्रीगौरी, ३ चैतीगौरी, ४ पहाडीगौरी, ५ देशीतोडी, ६ देशिकारः, ७ गौरः, ८ त्रिवणः, ९ मूलतानी, १० धनाश्रीः, ११ वसंतः, १२ रामकरी, १३ गुर्जरी, १४ बहुली, १५ रेवा, १६ भटियारः, १७ षट्, १८ पंचमः, १९ जयंतश्रीः, २० आसावरी, २१ देवगांधारः, २२ सैंधव्यासावरी, २३ गुणकरी. |
| ४ कर्णाटः | १ कानरः, २ वागीश्वरीकानरः, ३ खंबावती, ४ सोरटः ५ परजः, ६ मारुः, ७ जैजयंती, ८ ककुभा, ९ कामोदः, १० कामोदी, ११ गौरः, १२ मालकौशिकः, १३ हिंदोलः, १४ सुग्राही, १५ अडाणः, १६ गौरकानरः, १७ श्रीरागः. |

| | |
|---|---|
| ५ केदारः | १ केदारनाटः, २ आभीरनाटः, ३ खंबावती, ४ शंकराभरणः, ५ बिहागरा, ६ हंबीरः, ७ श्यामः, ८ छायानाटः, ९ भूपाली, १० भीमपलासिका, ११ कौशिकः, १२ मारुः. |
| ६ इमनः | १ इमनः, २ शुद्धकल्याणः, ३ पूरिया, ४ जयत्कल्याणः. |
| ७ सारंगः | १ सारंगः, २ पटमंजरी, ३ वृंदावनी, ४ सामंतः, ५ बडहंसकः. |
| ८ मेघः | १ मेघमल्लारः २ गौडसारंगः, ३ नाटः, ४ वेलावली, ५ अलैया, ६ सुहः, ७ देशीसुहः, ८ देशाख्यः ९ शुद्धनाटः. |
| ९ धनाश्रीः | १ धनाश्रीः, २ ललितः. |
| १० पूर्वी | १ पूर्वी. |
| ११ मुखारी | १ मुखारी. |
| १२ दीपकः | १ दीपकः |




